H.R.003/004
तत्कुर्यादासनं स्थैर्यं आरोग्यं चाङ्गपाटवम् ।
H.R.003/007
आदिनाथोदिताः पीठाः देहारोग्य सुखप्रदाः ।
H.R.003/096
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ।
S.SV.308
अतिवृष्टिः सुभिक्षं स्यादारोग्यं सौख्यमेव च ।
Y.M.090
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ।

### आरोहण
Y.R.195
यथा मूर्धनि प्राणस्य सर्वस्यारोहणं भवेत् ।
Y.R.197
प्राणस्यारोहणे तत्र चतस्रोगतयः क्रमात् ।
Y.R.235
प्राणस्यारोहणं तेन मेरुदण्डे प्रजायते ।
Y.R.294
प्राणस्यारोहणे वापि परकायप्रवेशने ।

### आर्जव
H.R.003/002
दया दाक्षिण्यमास्तिक्यमार्जवं मार्दवं क्षमा ।
H.R.003/014
उत्तानकूर्मं कूर्मं च बद्धकूर्मं च नार्जवम् ।
Y.Y.001/050
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ।
Y.Y.001/064
प्रवृत्तौ वा निवृत्तौ वा एकरूपत्वमार्जवम् ।

### आर्त
S.SV.110
आर्तिशोकविषादेषु ज्वरितेमूर्च्छितेऽपि वा ।

### आर्द्रक
S.SV.170
श्वेतमर्धेन्दुसंकाशं स्वादुकाषायमार्द्रकम् ।

### आर्द्रा
S.SV.202
पूर्वाषाढा तथाऽऽश्लेषा मूलमार्द्रा च रेवती ।

### आलम्बन
A.Y.002/111
तेजाश्चिन्तनमन्तरालकमले शून्याम्बरालम्बनम् ।

### आलम्बाभाव
A.Y.002/068
आलम्बाभावादपचीयमाना...शान्तिमुपैतिदृष्टिः ।

### आलस
Y.R.070
इत्थं मासद्वयंकुर्यात् त्रिमासं वा गतालसः ।

### आलस्य
H.R.002/013
आलस्यं वातदोषघ्नं कृमिकीटं निहन्ति च ।
H.R.002/018
न क्षुधा न तृषा निद्रा नैवालस्यं प्रजायते ।
S.SV.194
क्षुधा तृषा तथा निद्रा कान्तिरालस्यमेव च ।
Y.R.008
आलस्यहतबुद्धीनां शास्त्रं स्यादवलम्बनम् ।

### आलिङ्गन
S.SV.280
शयने वा प्रसङ्गं वा युवत्यालिङ्गनेऽपि वा ।

### आवर्तन
Y.R.026
प्रणवादिपवित्रस्य मन्त्रस्यावर्तनं जपः ।

### आवर्तवेग
H.R.001/032
अमन्दावर्तवेगेन तुन्दं सव्यापसव्यतः ।
H.R.001/034
इडयावर्तवेगेन तथा पिङ्गल्या पुनः ।
S.K.S.110
अमन्दावर्तवेगेन जठरं दक्षवामयोः ।

### आवर्त्तग
S.SV.166
आवर्त्तगश्चत्युष्णश्च शोणाभश्चतुरङ्गुलः ।





### आवर्त्तन
Y.R.305
हंसोहंसोहमित्येवं पुनरावर्त्तनक्रमात् ।

### आवृत
H.R.004/047
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।

### आश्रम
S.SV.102
आश्रमे धर्मप्रासादे वस्तूनां सङ्ग्रहेऽपि च ।
Y.Y.001/029
कुर्याद्यज्ञेन देवेभ्यः स्वाश्रमं धर्ममाचरन् ।
Y.Y.001/029
चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः ।
Y.Y.001/037
आनुलोम्यप्रसूतानां त्रयाणामाश्रमास्त्रयः ।
Y.Y.001/038
चतुर्णामाश्रमस्थानामहन्यहनि नित्यशः ।
Y.Y.001/039
तस्मात्त्वमपि योगीन्द्र स्वाश्रमं धर्ममाचरन् ।
Y.Y.001/056
ब्रह्मचर्याश्रमस्थानां यतीनां नैष्ठिकस्य च ।
Y.Y.001/057
ब्रह्मचर्यं तु तत्प्रोक्तं गृहस्थाश्रमवासिनाम् ।
Y.Y.005/005
स्वाश्रमस्थः सदाचारः विद्वद्भिश्च सुशिक्षितः ।
Y.Y.006/019
स्वाश्रमस्थस्य वैश्यस्य केचिदिच्छन्ति वैदिकम् ।
Y.Y.011/012
गच्छन्तु साम्प्रतं सर्वे ऋषयः स्वाश्रमं प्रति ।
Y.Y.011/016
ते यान्ति मुनयः सर्वे स्वाश्रमेषु यथागतम् ।

### आश्लेषा
S.SV.202
पूर्वाषाढा तथाऽऽश्लेषा मूलमार्द्रा च रेवती ।

### आसक्ति
Y.R.132
दुर्लभं मानुषं देहं मत्वाऽऽसक्तिं न कारयेत् ।

### आसन
A.Y.001/065
अहोरात्रल्येनापि योगी च स्वासने स्थितः ।
A.Y.002/038
सदादृष्टिविशेषाश्च विविधान्यासनानि च ।
G. P.001/007
आसनं प्राणसंरोधः प्रत्याहारश्च धारणा ।
G. P.001/008
आसनानि च तावन्तो यावन्तो जीवजन्तवः ।
G. P.001/010
आसनेभ्यः समस्तेभ्यो द्वयमेतदुदाहृतम् ।
G. P.002/011
आसनेन रुजोहन्ति प्राणायामेन पातकम् ।
G. P.002/016
सम्बद्धासनमेढ्रमङ्घ्रियुगलं कर्णाक्षिनासापुटा...।
G. P.002/052
आसनेन समायुक्तः प्राणायामेन संयुतः ।
H.R.001/017
चतुरशीत्यासनानि प्राहुश्चैतद्धठाह्वयम् ।
H.R.001/048
नाभिदघ्नजले पायुर्न्यस्तनालोत्कटासनः ।
H.R.003/004
हठस्य प्रथमाङ्गत्वादासनं लक्ष्यते मया ।
H.R.003/004
तत्कुर्यादासनं स्थैर्यं आरोग्यं चाङ्गपाटवम् ।
H.R.003/005
अङ्गीकृतान्यासनानि लक्ष्यन्ते कानिचिन्मया ।
H.R.003/010
स्वस्तिकं गोमुखं वीरं माण्डूकं मर्कटासनम् ।
H.R.003/018
राजासनमथेन्द्राणी शरभासनमेव च ।
H.R.003/019
ब्रह्मासनं नागपीठं अन्तिमं च शवासनम् ।
H.R.003/019
एवं मिलित्वा चतुरशीत्यासनानि ।
H.R.003/020
स्वस्तिकं गोमुखं पद्मं वीरसिद्धासनं तथा ।
H.R.003/021
मायूरं कुक्कुटं चैव भद्रं सिंहासनं तथा ।

H.R.003/021
मुक्तासनं तु विख्यातं तेषु मध्यं चतुष्टयम् ।
H.R.003/022
चतुरशीत्यासनानि शिवेन कथितानि तु ।
H.R.003/023
श्रेष्ठं तथापि च सत्वे तिष्ठे सिद्धासने सदा ।
H.R.003/025
गुल्फान्तरं च निक्षिप्य सिद्धाः सिद्धासनं विदुः ।
H.R.003/026
एतत्सिद्धासनं प्राहुः अन्ये वज्रासनं विदुः ।
H.R.003/026
मुक्तासनं वदन्त्येके प्राहुर्गुप्तासनं परे ।
H.R.003/028
नासनं सिद्धसदृशं कुम्भकं केवलोपमः ।
H.R.003/029
भद्रासनं भवेदेतत् सर्वव्याधि विषापहम् ।
H.R.003/032
सिंहासनं भवेदेतत् भजन्तं योगिभिः सदा ।
H.R.003/032
बन्धत्रितयसंस्थानं कुरुते चासनोत्तमम् ।
H.R.003/034
पद्मासनं भवेदेतत्सर्वेषामपि पूज्यते ।
H.R.003/037
इदं पद्मासनं प्रोक्तं सर्वव्याधिनिवारणम् ।
H.R.003/038
कृत्वा सम्पुटितौ करौ दृढतरं बद्ध्वा तु पद्मासनं ।
H.R.003/039
पद्मासनस्थितो योगी नाडीद्वारेषु पूरयेत् ।
H.R.003/042
...अभिभवति च दोषानासनं श्रीमयूरम् ।
H.R.003/047
जान्वोः पार्श्वगतौ हस्तौ दण्डवद्भैरवासनम् ।
H.R.003/048
भद्रासनं सुखं स्थाप्य विपरीते तु द्वे पदोः ।
H.R.003/050
धनुराकर्षणाकृष्टं धनुरासनमेव च ।
H.R.003/053
इतरस्मिन्स्तथा चोरुं वीरासनमितीरितम् ।
H.R.003/055
पादमध्ये शिरः क्षिप्त्वा धनुवन्मर्कटासनम् ।

H.R.003/056
...परिवर्तिताङ्गो श्री मत्स्यनाथोदितमासनं स्यात् ।
H.R.003/059
करेण बन्धयेत्तं तु बद्धमत्स्येन्द्रमासनम् ।
H.R.003/060
सुखमुन्नमयन्नुच्चैर्निरालम्बनमासनम् ।
H.R.003/061
निरालम्बन योगी स्यान्निरालम्बनमासनम् ।
H.R.003/061
निरालम्बनता ध्यानं निरालम्बनमासनम् ।
H.R.003/071
पृष्ठे संस्थाप्य यत्नेन पादपीठनमासनम् ।
H.R.003/072
निवेश्य भूमौ संस्थाप्य व्योमस्थं कुक्कुटासनम् ।
H.R.003/073
कुक्कुटासनबन्धस्थो दोर्भ्यां संबध्य कन्धराम् ।
H.R.003/074
गुल्फौ स्यातामुन्मुखः सन् वृश्चिकासनमीर्यंते ।
H.R.003/076
आसनेन रुजं हन्ति प्राणायामेन पातकम् ।
H.R.003/077
सर्वासनश्रमहरं शयितं तु शवासनं ।
H.R.003/078
अथासने दृढे योगी वशी हितमिताशनः ।
H.R.003/084
सिद्धे वा बद्धपद्मे वा स्वस्तिकेवाभवासने ।
H.R.003/089
उत्तिष्ठेदुत्तमे प्राणरोधे पद्मासनं मुहुः ।
H.R.003/099
नानास्वस्तिक सिद्ध पद्मक महावीरासनाद्यान्वितः ।
H.R.004/020
दृढासने भवेद्योगी कामदेव समस्तथा ।
S.K.S.007
तासां निवारणं कार्यमासनैर्दिव्यभेषजैः ।
S.K.S.009
कुम्भानामासनानां च करणानां च साधने ।
S.K.S.136
नौलीं कृत्वा तु शुद्धः स्यादुत्कटासनसंस्थितः ।
Y.M.002
आसनं प्राणसंरोधः प्रत्याहारश्च धारणा ।





Y.M.003
आसनानि च तावन्ति यावन्तो जीवजन्तवः ।
Y.M.005
आसनेभ्यः समस्तेभ्यः द्वयमेव विशिष्यते ।
Y.M.005
एकं स्वस्थासनं (सिद्धासनं)...कमलासनम् ।
Y.M.101
आसनेन रुजं हन्ति प्राणायामेन पातकम् ।
Y.M.106
संबध्यासनमूलमङ्घ्रिघटितं कर्णाक्षिनासापुट...।
Y.M.136
आसनेन समायुक्तः प्राणायामेन च संयुतः ।
Y.M.141
आसनेन समायुक्तः प्राणायामेन संयुतः ।
Y.R.016
यमश्च नियमश्च स्यादासनं प्राणसंयमः ।
Y.R.032
आसनानि बहून्याहुर्मुनयो जीवभेदतः ।
Y.R.041
ज्ञेयं सर्वासनेष्वेतन्मुख्यं पीठचतुष्टयम् ।
Y.R.042
स्थिरं स्यादासनं यस्य स योगं कर्तुमर्हति ।
Y.R.043
आसनं त्वेकतानेन कृतं दुःखावहं भवेत् ।
Y.R.043
शनैरभ्यासतस्तस्माद्वर्द्धयेदासने स्थितिम् ।
Y.R.044
यदा प्रहरपर्यंतं स्थिरं स्यादेकमासनम् ।
Y.R.044
तदा योग्यं विजानीयादासनं योगसाधने ।
Y.R.045
आसने स्थिरतां याते मनःस्थैर्यं भवेद् ध्रुवम् ।
Y.R.046
ततो योगस्यसिद्धिः स्यात् तस्मादासनमभ्यसेत् ।
Y.Y.001/046
यमश्च नियमश्चैव आसनं च तथैव च ।
Y.Y.001/048
आसनान्युत्तमान्यष्टौ त्रयं तेषुत्तमोत्तमम् ।
Y.Y.003/001
आसनान्यधुना वक्ष्ये शुणु गार्गि तपोधने ।

Y.Y.003/017
यमैश्च नियमैश्चैव आसनैश्च सुसंयुता ।
Y.Y.005/012
मृद्वासनोपरि कुशान्समास्तीर्य ततोऽजिनम् ।
Y.Y.005/013
इष्टदेवं गुरुं नत्वा तत आरुह्य चासनम् ।
Y.Y.006/028
देहश्चोत्तिष्ठते तेन कृतासनपरिग्रहः ।
Y.Y.006/050
शक्यमासनमास्थाय समाहितमनास्तथा ।
Y.Y.006/062
आसने नान्यधीरास्ते द्विजो रहसि नित्यशः ।
Y.Y.006/063
आसने नान्यधीरास्ते रहस्येव जितेन्द्रियः ।
Y.Y.006/064
आसने नान्यधीरास्ते दीपं हस्ते विलोकयन् ।
Y.Y.010/014
आसने नान्यधीरास्ते प्राङ्मुखो वाप्युदङ्मुखः ।
Y.Y.012/002
आयुर्विघातकृत्प्राणो निरुद्धस्त्वासनेन वै ।
Y.Y.012/007
आसन वाहने पश्चान्न भेतव्यं त्रिवत्सरात् ।

## आसनबन्ध

Y.B.140
अनेनाऽभ्यासयोगेन, नित्यमासनबन्धतः ।

## आसनस्थ

A.Y.001/053
लयेन पलमात्रेण चासनस्थो न विद्यते ।

## आसनाग्र्य

H.R.003/066
इति पश्चिमतानमासनाग्र्यं पवनं पश्चिमवाहिनं...।

## आस्तिक

S.SV.012
आश्चर्यं नास्तिके लोकं आधारंत्वास्तिकेजने ।

## आस्तिकभाव

Y.R.286
तस्मादास्तिकभावेन कुर्याद्योगस्य साधनम् ।

## आस्तिक्य

**H.R.003/002**

दया दाक्षिण्यमास्तिक्यमार्जवं मार्दवं क्षमा ।

**Y.Y.002/001**

तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् ।

**Y.Y.002/004**

धर्माधर्मेषु विश्वासो यस्तदास्तिक्यमुच्यते ।

## आस्य

**G. P.002/037**

दूर्ध्वास्यो रसनां निधाय विधिवच्छक्तिं परां चिन्तयेत् ।

**G. P.002/038**

काकचञ्चुवदास्येन शीतलं सलिलं पिबेत् ।

**S.SV.361**

तत्कर्णांसकरास्य पार्श्वहृदया...दिङ्मूढो हि नरः... ।

**Y.M.126**

ऊर्ध्वास्ये रसनां नियम्य विवरे शक्तिं परां चिन्तयन् ।

**Y.M.128**

काकचञ्चुपुटास्येन शीतलं सलिलं पिबेत् ।

**Y.M.132**

ऊर्ध्वास्ये भ्रुवसन्निवेश नयने सिक्ताङ्गगात्रं पिबेत् ।

**Y.R.167**

चतुर्भुजं प्रसन्नास्यं चन्द्रभालं त्रिलोचनम् ।

**Y.Y.004/050**

आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यमे ।

**Y.Y.012/009**

स्वपुच्छमास्येन निगृह्य...संयम्य मरुद्गणानाम् ।

## आस्वादन

**Y.R.255**

अमृतास्वादनं पश्चाज्जिह्वाग्रे सम्प्रवर्तते ।

## आहरण

**Y.R.121**

यत्नादाहरणं तेषां प्रत्याहारोनिगद्यते ।

**Y.Y.007/002**

बलादाहरणं तेषां प्रत्याहारः स उच्यते ।

## आहार

**G. P.002/091**

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।

**H.R.002/070**

आहारो बहुलस्तस्य संपाद्यः साधकस्य च ।

**S.SV.395**

स्वस्थाने तु समासीनो निद्रां चाहारमल्पकम् ।

**Y.R.196**

अन्नाहारं परित्यज्य केवलं दुग्धभुग्भवेत् ।

# इ

## इच्छा

**G. P.001/086**

क्रिया इच्छा तथा ज्ञानं ब्राह्मी रौद्री च वैष्णवी ।

**H.R.002/064**

कण्ठमाकुञ्च्य हृदये स्थापयेद् दृढमिच्छया ।

**Y.B.122**

कण्ठमाकुञ्च्य हृदये, स्थापयेद्दृढमिच्छया ।

## इच्छारूप

**Y.B.177**

सिद्धा नित्या महावीर्या, इच्छारूपाश्च योगजाः ।

## इडा

**G. P.001/027**

इडा च पिङ्गला चैव सुषुम्णा च तृतीयका ।

**G. P.001/029**

इडा वामे स्थिता भागे पिङ्गला दक्षिणे स्थिता ।

**G. P.001/032**

इडापिङ्गलासुषुम्णाः प्राणमार्गे समाश्रिताः ।

**G. P.001/100**

प्राणांश्चेदिडयापि चेत्परिमितं भूयोऽन्यया रेचयेत्... ।

**H.R.001/034**

इडयावर्तवेगेन तथा पिङ्गलया पुनः ।

**H.R.002/012**

यथेष्टं कुम्भयेद्वायुं रेचयेदिडया ततः ।

**H.R.002/015**

पूर्ववत्कुम्भयेत्प्राणं रेचयेदिडया ततः ।

**H.R.002/020**

इडया वायुमाकृष्य पूर्ववत्कुम्भकादनु ।

**H.R.002/025**

कुम्भकं पूर्ववत्कृत्वा रेचयेदिडयानिलम् ।

**H.R.002/122**

इडायाः पिङ्गलायाश्च सुषुम्नायाश्च मध्यतः ।





**H.R.002/144**

इडा चन्द्रा शशी वाली गङ्गा वामस्तु बोधिता ।

**H.R.002/144**

इडायाः वाचकाः शब्दाः पर्यायेण प्रकीर्तिताः ।

**H.R.003/087**

प्राणं चेदिडया पिबन्नियमितं भूयोऽन्यया रेचयेत् ।

**H.R.004/036**

इडा नाडी च सर्वासां मुख्याश्चैताश्चतुर्दश ।

**H.R.004/037**

इडायां पिङ्गलायां च सोमसूर्यौ प्रतिष्ठितौ ।

**H.R.004/038**

इडानिशाकरौ ज्ञेयौ सुषुम्ना सुखरूपिणी ।

**S.K.S.045**

इडया सम्प्रवेश्यैव ततः पिङ्गलया हरेत् ।

**S.SV.036**

इडा च पिङ्गला चैव सुषुम्ना च तृतीयिका ।

**S.SV.038**

इडा वामे स्थिता भागे पिङ्गला दक्षिणे स्मृता ।

**S.SV.041**

पिङ्गलेडा सुषुम्ना च प्राणमार्गे समाश्रिताः ।

**S.SV.048**

इडापिङ्गलासुषुम्नाभिर्नाडीभिस्तिसृभिबुधः ।

**S.SV.049**

इडा वामे च विज्ञेया पिङ्गला दक्षिणे स्मृता ।

**S.SV.050**

इडायां तु स्थितश्चन्द्रः पिङ्गलायां च भास्करः ।

**S.SV.112**

इडायां सिद्धिदं प्रोक्तं योगाभ्यासादि कर्म च ।

**S.SV.374**

इडा गङ्गेति विज्ञेया पिङ्गला यमुना नदि ।

**Y.B.105**

धारयेदुदरे योगी रेचयेदिडया पुनः ।

**Y.M.018**

इडा च पिङ्गला चैव सुषुम्ना च तृतीयकम् ।

**Y.M.020**

इडा पिङ्गला सुषुम्नेति तिस्रो नाड्य उदीरिताः ।

**Y.M.021**

इडा वामे स्थिता भागे पिङ्गला दक्षिणे तथा ।

**Y.R.076**

इडा च पिङ्गला चैव सुषुम्नेति प्रकीर्तिताः ।

**Y.R.077**

इडा वामे स्थिता नित्यं पिङ्गला दक्षिणे तथा ।

**Y.V.011**

इडापिङ्गलयोर्मध्ये सुषुम्ना सुखरूपिणी ।

**Y.V.011**

इडा वहति वामे च पिङ्गला वहति दक्षिणे ।

**Y.Y.004/026**

इडा च पिङ्गला चैव सुषुम्णा च सरस्वती ।

**Y.Y.004/031**

इडा च पिङ्गला चैव तस्याः सव्ये च दक्षिणे ।

**Y.Y.004/032**

इडायां पिङ्गलायां च चरतश्चन्द्रभास्करौ ।

**Y.Y.004/032**

इडा तस्याः स्थिता सव्ये दक्षिणे पिङ्गला स्थिता ।

**Y.Y.004/033**

इडायां चन्द्रमा ज्ञेयः पिङ्गलायां रविः स्मृतः ।

**Y.Y.004/036**

गान्धारी हस्तिजिह्वा च इडायाः पृष्ठपार्श्वयोः ।

**Y.Y.004/043**

इडा च सव्यनासान्तं सव्यभागे व्यवस्थिता ।

**Y.Y.004/043**

गान्धारी सव्यनेत्रान्तमिडायाः पृष्ठतः स्थिता ।

**Y.Y.005/017**

इडया वायुमारोप्य पूरयित्वोदरस्थितम् ।

**Y.Y.005/019**

पुनर्विरेचयेद्धीमानिडया तु शनैः शनैः ।

**Y.Y.006/004**

इडया वायुमारोप्य पूरयित्वोदरस्थितम् ।

**Y.Y.006/010**

यावद्वा शक्यते पश्चाद्रेचयेदिडयानिलम् ।

**Y.Y.006/011**

एवमेव पुनः कुर्यादिडयापूर्य पूर्ववत् ।

**Y.Y.006/045**

आत्मन्यात्मानमिडया समानीय भ्रुवोन्तरे ।

## इडानाडी

**S.SV.049**

इडानाडी स्थितावामाततोव्यस्ताच पिङ्गला ।

## इतिहास

**Y.Y.002/013**

अधीत्य वेदं सूत्रं वा पुराणं सेतिहासकम् ।

## इन्द्रगोप

**G. P.002/056**

यत्तालुस्थितमिन्द्रगोपसदृशं तत्त्वं त्रिकोणानलम् ।

**S.K.S.034**

इन्द्रगोपनिभं त्र्यस्रं तालुस्थं रं शुचिं स्मरेत् ।

**Y.M.147**

तालौ संस्थितमिन्द्रगोपसदृशं तत्त्वं त्रिकोणान्वितम् ।

## इन्द्राणी

**H.R.003/018**

राजासनमथेन्द्राणी शरभासनमेव च ।

## इन्द्रिय

**A.Y.001/007**

सर्वमूर्तिमयं रूपं गुणैरिन्द्रियमानदम् ।

**A.Y.001/034**

मनःपवनयोर्नाशादिन्द्रियार्थ विमुञ्चति ।

**A.Y.001/035**

इन्द्रियार्थेर्यदा मुक्तो बाह्यज्ञानं न जायते ।

**A.Y.002/007**

इन्द्रियाणि दश प्राणान् जुहोति ज्योतिर्मण्डले ।

**A.Y.002/029**

अभ्यस्तयोरिन्द्रियवर्ग...मोंक्षपदस्य सिद्धिः ।

**A.Y.002/031**

...बुद्धीन्द्रियदेहनाशादद्वैतबुद्धिः सहजस्थितस्य ।

**A.Y.002/046**

अमनस्कं सुशिष्येषु संक्राम्यन्द्रियजं सुखम् ।

**A.Y.002/085**

कहलीव महामाया समनस्केन्द्रिये सदा ।

**A.Y.002/086**

इन्द्रियग्राहपदयोः निश्वासोच्छ्वासपक्षयोः ।

**A.Y.002/088**

प्रशान्तेन्द्रियपादातो बुद्धिशक्तिसमन्वितः ।

**A.Y.002/091**

इन्द्रियग्राहनिर्मुक्ते निर्वाते निर्मलमृते ।

**G. P.002/024**

योगी प्रत्याहरेदेवमिन्द्रियाणि तथात्मनि ।

**G. P.002/043**

...देवं यः कुरुते जितेन्द्रियगणो नैवास्ति तस्य क्षयः।

**H.R.001/047**

धात्विन्द्रियान्तःकरणप्रसादं...कान्तिं दहनप्रदीप्तिम् ।

**H.R.003/024**

स्थाणुस्संयमितेन्द्रोयोऽचलदृशा पश्चेद्भ्रुवोरन्तरम् ।

**H.R.004/004**

इन्द्रियाणां मनो नाथो मनोनाथस्तु मारुतः ।

**H.R.004/052**

भूतैश्च पञ्चभिः प्राणाश्चतुर्विंशतिरिन्द्रियैः ।

**S.K.S.139**

धात्विन्द्रियान्तःकरणप्रसादो देहलघवम् ।

**S.SV.337**

अकस्मादिन्द्रियोत्पातः सन्निपाताग्रलक्षणम् ।

**Y.B.036**

ध्यानस्थोऽसौ तथाप्येवमिन्द्रियैर्विवशो भवेत् ।

**Y.B.050**

इन्द्रियाणि मनोबुद्धिकामक्रोधादिकं जितम् ।

**Y.B.187**

चिन्मयानि शरीराणि, इन्द्रियाणि तथैवच ।

**Y.M.115**

योगी प्रत्याहरेच्चैवमिन्द्रियाणि तथात्मनि ।

**Y.M.178**

इन्द्रियाणि मनोवृत्तिरपरोक्षेपयाहि सः ।

**Y.M.178**

अद्वयत्वं गते जीवे न मनो इन्द्रियाणि च ।

**Y.R.008**

इन्द्रियार्थेषु सक्तानां देहाध्यासवतां नृणाम् ।

**Y.R.046**

इन्द्रियाणां च चापल्यं शान्तिमायाति निश्चितम् ।

**Y.R.121**

इन्द्रियाणि चरंतीह विषयेषु स्वभावतः ।

**Y.R.122**

इन्द्रियाण्यवशीकृत्य यस्तु योगं समभ्यसेत् ।

**Y.R.134**

इन्द्रियाणां वशे यस्मादेतद्विश्वमशेषतः ।

**Y.Y.007/002**

इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।

**Y.Y.010/010**

निर्भयः सुप्रसन्नात्मा मर्त्यस्तु विजितेन्द्रियः ।





## इन्द्रियगण

**Y.R.134**

जितं तेन जगत्सर्वं येनेन्द्रियगणो जितः ।

## इन्द्रियज्ञान

**A.Y.001/064**

इन्द्रियज्ञानविस्तारो ब्रह्माण्डेऽप्यनुवर्तते ।

**A.Y.001/070**

एकत्वं चेन्द्रियज्ञानं महत्स्वानुभवात्मकम् ।

## इन्द्रियनिग्रह

**H.R.003/002**

मनः प्रसादसंतोषो मौनमिन्द्रियनिग्रहः ।

## इन्द्रियवर्ग

**Y.R.136**

तस्मादिन्द्रियवर्गस्य प्रत्याहारं प्रयत्नतः ।

## इन्द्रियार्थ

**A.Y.001/039**

विचारं चेन्द्रियार्थानां न वेत्ति विलयं गतः ।

**Y.R.008**

इन्द्रियार्थेषु सक्तानां देहाध्यासवतां नृणाम् ।

## इन्द्रियालय

**A.Y.002/087**

श्वाससूत्रशतोपेतमिन्द्रियालयसङ्कुलम् ।

## इन्धन

**G. P.002/050**

इन्धनानि यथा वह्निस्तैलवर्ति च दीपकः ।

## इष्टदेव

**Y.Y.005/013**

इष्टदेवं गुरुं नत्वा तत आरुह्य चासनम् ।

## इष्टदेवता

**S.SV.140**

स्वरज्ञानरहस्यात्तु न काचिच्चेष्टदेवता ।

## इष्टनाश

**S.SV.083**

तृतीये गमनं प्रोक्तमिष्टनाशं चतुर्थके ।

## इष्टभोजन

**Y.Y.006/066**

धारणं कुर्वतस्तस्य शक्तिः स्यादिष्टभोजने ।

## इष्टसिद्धि

**S.SV.055**

इष्टसिद्धिर्भवेत्तस्य महालाभो जयस्तथा ।

**S.SV.273**

इष्टसिद्धिर्भवेत्तस्य महालाभो जयस्तथा ।

## इष्टिका

**S.SV.116**

इष्टिकाकाष्ठपाषाणरत्नघर्षणदारणे ।

# ई

## ईरसखा

**S.K.S.036**

मलनिर्हरणं कुर्वन् प्राग्वदीरसखं स्मरन् ।

## ईश

**S.K.S.130**

नमस्कृत्य महेशाय पार्वतीशाय शम्भवे ।

**Y.R.012**

विनेशानुग्रहाज्जंतोर्दुर्लभं यस्य कस्यचित् ।

**Y.R.013**

तृतीयं गुरुसंयोगश्चतुर्थं चेशचिन्तनम् ।

**Y.R.027**

मनसा भक्तिभावेन यदीशस्य निरंतरम् ।

## ईशचिन्तन

**Y.R.013**

तृतीयं गुरुसंयोगश्चतुर्थं चेशचिन्तनम् ।

## ईशित्व

**A.Y.001/085**

लभते जगतीशित्वं येन विश्वगुरुर्भवेत् ।

## ईश्वर

**G. P.002/057**

तत्त्वं वायुमयं यकारसहितं तत्रेश्वरो देवता ।

**H.R.004/051**

यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।

H.R.004/058
ईश्वरस्य तु कर्तृत्वं नाङ्गीचक्रुश्च मण्डलः ।
S.K.S.027
खेचर्यङ्गानि कर्माणि यान्याह स्वयमीश्वरः ।
S.SV.129
विषये विपरीते च संस्मरेज्जगदीश्वरम् ।
S.SV.130
ईश्वरे चिन्तिते कार्यं योगाभ्यासादि कर्म च ।
Y.B.176
स्वात्मयोगैकनिष्ठे तु, स्वातन्त्र्यादीश्वरस्ततः ।
Y.M.150
तत्त्वं सत्यमयं यकारसहितं यत्रेश्वरो देवता ।
Y.R.024
शौचं तोषस्तपश्चैव जपश्चैश्वरचिन्तनम् ।
Y.R.029
ईश्वराराधनात्सिद्धिः समाधेर्जायते ध्रुवम् ।
Y.R.137
यस्यास्त्वभ्यासतो योगी सर्वसिद्धीश्वरोभवेत् ।
Y.R.164
सार्वज्ञादिगुणोपेतं विष्णुव्ययमीश्वरम् ।
Y.R.167
मृगशूलवराभीतिकरं सर्वज्ञमीश्वरम् ।
Y.R.301
तदर्थमीश्वरं चापि चिंतयेच्चेतसा मुहुः ।
Y.R.315
योगसिद्धिप्रदोऽनेन प्रीयतामीश्वरो हरिः ।
Y.V.026
चन्द्रामृतेन चिद्रूपमीश्वरं स्नाप्य भक्तितः ।
Y.Y.001/013
आनन्दममृतं नित्यं परमात्मानमीश्वरम् ।
Y.Y.006/076
एकाक्षरं परं ब्रह्म ध्यायन्प्रणवमीश्वरम् ।
Y.Y.008/014
विष्णुमप्स्वनले रुद्रमीश्वरं वायुमण्डले ।
Y.Y.009/020
वैश्वानरं जगद्योनिं शिखातन्विनमीश्वरम् ।
Y.Y.009/033
निर्विकारं परं शान्तं परमात्मानमीश्वरम् ।

## ईश्वरगुण
A.P.064
तदेश्वरगुणास्सर्वे दृश्यन्ते दशमासतः ।

## ईश्वरचिन्तन
Y.R.024
शौचं तोषस्तपश्चैव जपश्चैश्वरचिन्तनम् ।
Y.R.027
स्मरणं सर्वगत्वेन तदेवेश्वरचिन्तनम् ।

## ईश्वरपूजन
Y.Y.002/001
तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् ।
Y.Y.002/006
यथाशक्त्यर्चनं भक्त्या ह्येतदीश्वरपूजनम् ।
Y.Y.002/007
हिंसादिरहितः काय एतदीश्वरपूजनम् ।

## ईश्वरानुग्रह
H.R.001/079
ईश्वरानुग्रहेणैव योगसिद्धिस्तु जायते ।

## ईश्वराराधन
Y.R.029
ईश्वराराधनात्सिद्धिः समाधेर्जायते ध्रुवम् ।

## ईश्वरी
Y.B.019
योगहीनं कथं ज्ञानं, मोक्षदं भवतीश्वरि ।

# उ

## उकार
G. P.001/087
अकारश्च उकारश्च मकारो बिन्दुसंज्ञकः ।
Y.M.074
अकारश्च उकारश्च मकारो बिन्दु-संज्ञकः ।
Y.V.016
अकारो वह्निदेशे च उकारो हृदि संस्थितः ।
Y.V.018
अकारो ब्रह्म इत्याहुः उकारो विष्णुरुच्यते ।





## उकारमूर्ति
Y.Y.006/005
उकारमूर्तिमत्रापि संस्मरन्प्रणवं जपेत् ।
Y.Y.006/009
उकारमूर्तिमत्रापि संस्मरन्सुसमाहितः ।

## उग्रतेजस्
Y.Y.001/005
ब्रुवन्तं परमात्मानमृषीणामुग्रतेजसाम् ।
Y.Y.001/007
सभामध्यगता चेयमृषीणामुग्रतेजसाम् ।

## उच्चजप
Y.Y.002/014
वाचिक उपांशुरुच्चैश्च द्विविधः परिकीर्तितः ।
Y.Y.002/015
उच्चैर्जपादुपांशुश्च सहस्रगुण उच्यते ।
Y.Y.002/017
उच्चैर्जपस्तु सर्वेषां यथोक्तफलदो भवेत् ।

## उच्चाट
S.SV.097
व्यवहारे खलेच्चाटे द्वेषिविद्यादिवञ्चके ।
S.SV.118
व्यायामे मारणोच्चाटे षट्कर्मादिकसाधने ।

## उच्चाटन
A.Y.001/020
द्वेषोच्चाटनमारणादि कुहकैर्मन्त्रैः प्रपञ्चोद्गमः ।
S.SV.120
मारणे मोहने स्तम्भे विद्वेषोच्चाटने वशे ।
S.SV.159
ऊर्ध्वं मृत्युरधः शान्तिस्तिर्यगुच्चाटनं तथा ।
S.SV.160
तेजसि क्रूरकर्माणि मारणोच्चाटनेऽनिले ।

## उच्चासन
H.R.003/041
उच्चासनो दण्ड...खे मायूरमेतत् प्रवदन्ति पीठम् ।

## उच्छ्वास
A.Y.001/047
श्वासोच्छ्वासात्मकः प्राणः षड्भिः प्राणैः पलं...।
A.Y.002/022
प्राणाष्टोच्छ्वासनिःश्वासविध्वस्तविषयग्रहः ।
A.Y.002/060
निःश्वासोच्छ्वासहीनस्तु निश्चितं मुक्तएव सः ।
A.Y.002/086
इन्द्रियग्राहपदयोः निश्वासोच्छ्वासपक्षयोः ।
Y.R.304
प्राणः सर्वशरीरेषु श्वासोच्छ्वासक्रमेण वै ।
Y.Y.004/067
निःश्वासोच्छ्वासकासाश्च प्राणकर्मेति कीर्त्यते ।
Y.Y.006/028
निःश्वासोच्छ्वासकौ तस्य न विद्येते कथंचन ।

## उज्ज्वल
Y.R.065
नाभौ सञ्चिन्तयेद्योगी सूर्यमण्डलमुज्ज्वलम् ।
Y.R.271
दिवा निरीक्षयेद्बिन्दुं रात्रौ नक्षत्रमुज्ज्वलम् ।

## उज्ज्वलमस्तक
Y.R.163
मणिमेखलया युक्तकिरीटोज्ज्वलमस्तकम् ।

## उज्जायी
H.R.002/005
भस्त्रिका भ्रामरी सूर्यभेदोज्जाया च शीतली ।
H.R.002/007
सूर्यभेदनमुज्जाया तथा सीत्कारशीतली ।
H.R.002/016
गच्छन्तिष्ठन् प्रतीकार्यं उज्जायाख्या तु कुम्भकम् ।
Y.B.099
तथाऽभ्यसेत्सूर्यभेदमुज्जायी वापि शीतलीम् ।
Y.B.107
गच्छता तिष्ठता कार्य उज्जाय्याख्यस्तु कुम्भकः ।

## उड्यान
G. P.001/077
उड्यानं कुरुते यस्मादविश्रान्तं महाखगम् ।

### उड्यानबन्ध
**Y.R.091**
बहिरेवाथ तं रुद्ध्वा कुर्यादुड्यानबन्धनम् ।

### उड्डयानबन्धन
**Y.R.104**
रुद्ध्वा तं बहिरेवाशु कुर्यादुड्डयानबन्धनम् ।

### उड्डाण
**H.R.002/054**
उड्डाणं कुरुते यस्मात् अविश्रान्तो महाखगः ।

### उड्डियान
**S.SV.375**
बद्धपद्मासनो योगी बन्धयेदुड्डियानकम् ।
**Y.R.085**
प्रथमो मूलबन्धः स्यादुड्डियानो द्वितीयकः ।
**Y.R.087**
उड्डियानो भवेद्बंधः प्राणोड्डयनकारकः ।
**Y.R.094**
उड्डियाने कृतेबन्धे मूलबन्धोपि जायते ।

### उड्डीयान
**G. P.001/057**
महामुद्रां नभोमुद्रां उड्डीयानं जलन्धरम् ।
**G. P.001/077**
उड्डीयानं तदेव स्यान्मृत्युमातङ्गकेसरी ।
**G. P.001/078**
उड्डीयानो ह्ययं बन्धस्तत्र बन्धो निगद्यते ।
**H.R.002/033**
उड्डियाणं मूलबन्धो बन्धो जालन्धराभिधः ।
**Y.B.119**
उड्डीयानं तु सहजं गुरुणां कथितं सदा ।

### उत्कटासन
**H.R.001/048**
नाभिदध्रजले पायुन्र्यस्तनालोत्कटासनः ।
**S.K.S.136**
नौलीं कृत्वा तु शुद्धः स्यादुत्कटासनसंस्थितः ।

### उत्तमपुरुष
**H.R.004/051**
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।

### उत्तर
**S.SV.076**
वामाचारप्रवाहे तु न गच्छेत्पूर्व उत्तरे ।
**S.SV.175**
वायुश्चोत्तरदिग्ज्ञेयो मध्ये कोणगतं नभः ।
**S.SV.190**
पूर्वायां पश्चिमे याम्ये उत्तरस्यां यथाक्रमम् ।
**S.SV.335**
क्षीणो दक्षिणपश्चिमोत्तरपुरः षट्त्रिद्विमासैकतः ।

### उत्तराफाल्गुनी
**S.SV.204**
विशाखोत्तरफाल्गुन्यौ हस्तचित्रे पुनर्वसुः ।

### उत्तराभाद्रपद
**S.SV.202**
उत्तराभाद्रपदा तोयतत्त्वं शत्भिषक्प्रिये ।

### उत्तरायण
**S.SV.301**
पश्येद्विचक्षणो योगी दक्षिणे चोत्तरायणे ।

### उत्तराषाढा
**S.SV.201**
अभिजिदुत्तराषाढापृथ्वीतत्त्वमुदाहृतम् ।

### उत्तान
**H.R.002/087**
स्वयं दिगम्बरो भूत्वा उत्तानायास्तथोपरि ।
**H.R.003/035**
उत्तानौ चरणौ कृत्वा उर्वोः संस्थाप्य यत्नतः ।
**S.K.S.076**
उत्तानसुप्तलैत्रक्तजठरस्योपरि न्यसेत् ।

### उत्तानकूर्म
**H.R.003/014**
उत्तानकूर्मं कूर्मं च बद्धकूर्मं च नार्जनम् ।
**H.R.003/073**
शेते कूर्मवदुत्तानमेतदुत्तानकूर्मकम् ।

### उत्तानपाद
**G. P.002/043**
ऊर्ध्वास्यो भुवि सन्निपत्य नितरामुत्तानपादःपिबे...।





### उत्थान
**A.Y.001/048**
स्पर्शनं परतत्त्वस्याप्युत्थान च पुन. पुनः ।
**Y.R.278**
क्षणमन्तर्मुखोभूत्वा पुनरुत्थानकं व्रजेत् ।
**Y.Y.006/026**
कम्पको मध्यमः प्रोक्तः उत्थानश्चोत्तमो भवेत् ।

### उत्पत्ति
**A.Y.001/024**
भावाभावविनिर्मुक्तं विनाशोत्पत्तिवर्जितम् ।
**H.R.002/097**
उत्पत्ति स्थिति संहारे बिन्दुरेको हि कारणम् ।
**Y.B.002**
उत्पत्तिस्थितिसंहारकारिणे क्लेशहारिणे ।
**Y.B.028**
उत्पत्तिस्थितिसंहारस्फूर्तिज्ञानविवर्जितम् ।
**Y.Y.004/003**
उत्पत्तिं चापि नाडीनां चारणं च यथाविधि ।

### उत्पाटन
**S.K.S.028**
उत्पाटनं छेदनं च गर्भाधारणमेव च ।

### उत्पात
**S.SV.310**
उत्पातोपद्रवा भीतिरल्पा वृद्धिः स्युरीतयः ।

### उत्पादतल
**H.R.003/013**
आकाशमुत्पादतलं नाभीलसितपादकम् ।

### उत्फालक
**H.R.003/014**
वृश्चिकासन चक्राख्ये उत्फालकमितीर्यते ।

### उत्साह
**H.R.001/078**
उत्साहान्निश्चलद्धैर्यात्तत्त्वज्ञानार्थदर्शनात् ।

### उदक
**H.R.001/050**
पीत्वाकण्ठंसति गुडजलं नारिकेलोदकं वा ...।

**H.R.001/072**
मुद्गादिदिव्यमुदकंच यमीन्द्र पथ्यम् ।

### उदङ्मुख
**Y.Y.005/014**
प्राङ्मुखोदङ्मुखो वापि जितासनगतः स्वयम् ।
**Y.Y.010/014**
आसने नान्यधीरास्ते प्राङ्मुखो वाप्युदङ्मुखः ।

### उदय
**S.SV.068**
उदयं चन्द्रमार्गेण सूर्येणास्तमनं यदि ।
**S.SV.072**
सार्द्धद्विघटिकेपञ्च क्रमेणैवोदयन्ति च ।
**S.SV.074**
उदये दक्षिणे ज्ञेयःशुभाशुभविनिर्णयः ।
**S.SV.079**
सूर्योदये यदा सूर्यश्चन्द्रश्चन्द्रोदये भवेत् ।
**S.SV.082**
यदा प्रत्यूषकालेन विपरीतोदयो भवेत् ।
**S.SV.133**
विषमस्योदयो यत्र मनसाऽपि न चिन्तयेत् ।
**S.SV.145**
वामे वा दक्षिणे वाऽपि उदयाः पञ्च कीर्तिता ।
**S.SV.257**
स्थायिनोविजयं विद्याद्रिपुवश्योदयोऽपिच ।
**S.SV.322**
विपर्ययं च विज्ञेयं विषमस्योदये सति ।

### उदर
**A.P.010**
बिभ्राणः पवनं हठान्नियमितं ग्रासोऽस्ति मीनोदरे ।
**A.Y.001/019**
सर्वं चोदरपूरणाय पठनं न श्रेयसः कारणम् ।
**G. P.001/078**
उदरात्पश्चिमे भागे अधो नाभेर्निगद्यते ।
**H.R.001/049**
उदरगतपदार्थमुद्वमन्ती पवनमपानमुदीर्यकण्ठनाले ।
**H.R.002/024**
यथोदरं भवेत्पूर्णं पवनेन तथा लघु ।
**H.R.002/055**
उदरे पश्चिमं ताणं नाभेरूर्ध्वं च धारयेत् ।

H.R.003/042
हरति सकलरोगानाशु गुल्मोदरादीन...।
H.R.003/066
उदयं जठरानलस्य कुर्यादुदरे कार्श्यमरोगतां च पुंसाम् ।
H.R.003/086
प्राणं सूर्येण चाकृष्य पूरयित्वोदरं शनैः ।
S.K.S.140
गुल्मप्लीहोदरादीनां नाशनं सुखवर्धनम् ।
S.SV.252
भूतत्त्वेनोदरे घातः पदस्थानेऽम्बुना भवेत् ।
Y.B.104
उदरे वातदोषघ्नं कण्ठदोषं निहन्ति च ।
Y.B.105
धारयेदुदरे योगी रेचयेदिड्या पुनः ।
Y.M.050
उदरात्पश्चिमे भागे अधो नाभेस्तता युते ।
Y.M.086
प्राणं सूर्येण चाकृष्य पूरयेदुदरं शनैः ।
Y.R.052
कुम्भयित्वोदरेसम्यक् सूर्यद्वारेण रेचयेत् ।
Y.R.059
कुम्भयेदुदरे पीतं प्राणं धृत्या यथाभलम् ।
Y.Y.004/052
उदरे वृषणे कट्यां जङ्घेनाभौ वदन्ति हि ।
Y.Y.005/017
इडया वायुमारोप्य पूरयित्वोदरस्थितम् ।
Y.Y.006/004
इडया वायुमारोप्य पूरयित्वोदरस्थितम् ।
Y.Y.006/011
नाड्या प्राणं समारोप्य पूरयित्वोदरस्थितम् ।
Y.Y.006/024
बाह्यादापूरणं वायोरुदरे पूरको हि सः ।
Y.Y.006/025
बहिर्यद्रेचनं वायोरुदराद्रेचकः स्मृतः ।
Y.Y.006/037
बाह्यात्प्राणं समाकृष्य पूरयित्वोदरस्थितम् ।
Y.Y.007/035
नासाभ्यां वायुमारोप्य पूरयित्वोदरस्थितम् ।

## उदरकर्मन्

S.K.S.077
उदरे कर्म तत्प्रोक्तं वाराहं शम्भुना पुरा ।

## उदान

G. P.001/033
प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।
G. P.001/034
समानो नाभिदेशे तु उदानः कण्ठमध्यतः ।
S.K.S.048
उदानोऽत्र प्रधानोऽस्ति ज्ञातव्यो गुरुतः सदा ।
S.K.S.049
निष्ठीवेद्वक्त्रमार्गेण ष्ठीवनं स्यादुदानतः ।
S.K.S.074
उदानाख्योऽनेन देवो वायुदोषं निवर्तयेत् ।
S.K.S.094
उदानेनैव वमनमुपवासफलप्रदम् ।
S.SV.042
प्राणोऽपानः समानश्च उदानोव्यान एव च ।
S.SV.044
समानो नाभिदेशे तु उदानः कण्ठमध्यगः ।
Y.M.022
प्राणापानसमानश्च उदानो व्यान एव च ।
Y.M.023
समानो नाभिदेशे तु उदानः कण्ठमध्यगः ।
Y.V.013
प्राणोऽपानः समानश्च उदानो व्यान एव च ।
Y.Y.004/047
प्राणोऽपानःसमानश्च उदानो व्यान एव च ।
Y.Y.004/055
उदानः सर्वसन्धिस्थः पादयोर्हस्तयोरपि ।

## उदानकर्मन्

Y.Y.004/068
उदानकर्म तत्प्रोक्तं देहस्योन्नयनादि यत् ।

## उदाराङ्ग

Y.Y.009/014
चतुर्भुजमुदाराङ्ग शङ्खचक्रगदाधरम् ।





## उदावर्त

G. P.001/061
क्षयकुष्ठमुदावर्तगुल्माजीर्णपुरोगमाः ।
H.R.002/042
क्षयकुष्ठ उदावर्त गुल्म प्लीह पुरोगमाः ।

## उदासीन

A.Y.001/018
जायमानामनस्कस्य उदासीनस्य सर्वतः ।
A.Y.002/037
नोत्पन्नस्वावबोधस्य ह्युदासीनस्य सर्वतः ।
A.Y.002/053
यदा भवेदुदासीनस्तदा तत्त्वं प्रकाशते ।
A.Y.002/055
न किञ्चिच्चिन्तयेद् योगी औदासीन्यपरो भवेत् ।
A.Y.002/059
औदासीन्यामृतौघेन वर्तमानेन योगिनाम् ।
A.Y.002/081
जायमानामनस्कस्य ह्युदासीनस्य तिष्ठतः ।
A.Y.002/093
तस्माच्चित्तं स्थिरीकुर्यादौदासीन्यपरायणः ।
H.R.004/006
उदासीनपरो भूत्वा सदाभ्यासेन संयमी ।

## उद्गार

G. P.001/036
उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः ।
S.K.S.018
उद्गाराख्यं महत्कर्म शिरासञ्चालनं तथा ।
S.K.S.108
...माणिबन्धं तु कुर्वन् नोद्गारेण प्रक्षिपेद्भूमिभागे ।
S.SV.046
उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः ।
Y.Y.004/069
उद्गारादि गुणो यस्तु नागकर्मेति कीर्त्यते ।

## उद्गारकरण

S.K.S.074
बलादुद्गारकरणमुद्गाराख्यं प्रकीर्तितम् ।

## उद्वेग

S.SV.080
उद्वेगः कलहो हानिः शुभं सर्व निवारयेत् ।
S.SV.083
प्रथमे मनउद्वेगं धनहानिर्द्वितीयके।

## उन्नयन

Y.Y.004/068
उदानकर्म तत्प्रोक्तं देहस्योन्नयनादि यत् ।

## उन्मत्त

A.Y.002/036
उन्मत्ततामभोज्यान्नपानं पाखण्डवृत्तिता ।

## उन्मत्तता

A.Y.001/019
पाखण्डव्रत भस्मचीवरजटाधारित्वमुन्मत्तता ।

## उन्मनी

A.Y.002/014
नोध्वाः कुण्डलीभेद उन्मन्याश्चैव न क्रमः ।
H.R.004/006
उन्मनी कारणं सद्यो नादमेवानुधारयेत् ।
H.R.004/026
उन्मनी कल्पलतिका सद्य एव फलिष्यति ।
H.R.004/028
एको देवो निरालम्बः एकावस्था मनोन्मनी ।

## उन्मनीकारक

A.Y.001/008
पूर्वयोगस्य मार्गोऽयमुन्मनीकारकः क्षणात् ।

## उन्मनीभाव

A.Y.002/080
मनसोऽप्युन्मनी भावेऽद्वैतभावः प्रकल्पते ।
H.R.003/082
कथं स्यादुन्मनीभावः कार्यसिद्धिः कथं भवेत् ।

## उन्मार्ग

G. P.002/040
उन्मार्गेण हृतं याति वञ्चयित्वा मुखं रवेः ।
Y.M.129
उन्मार्गेपात्र जलं याति वञ्चयित्वा मुखे रवौ ।

## उन्मीलन
G. P.001/036
उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः ।
S.SV.046
उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः ।
Y.M.025
नागो गृह्णाति पञ्चैताः कूर्म उन्मीलने स्थितः ।

## उन्मुख
H.R.003/074
गुल्फौ स्यातामुन्मुखः सन् वृश्चिकासनमीर्यते ।

## उन्मूलन
A.Y.002/084
अमनस्कखनित्रेण समूलोन्मूलने कृते ।

## उन्मेष
A.Y.001/012
तारकोन्मेषयुक्तत्वादपि तारक उच्यते ।
A.Y.001/053
स्वल्पश्वासो भवेद् योगी स्वल्पोन्मेषयुतस्तदा ।
Y.R.273
यदा मुहुर्तपर्यंतं निमेषोन्मेषवर्जिता ।

## उपजिह्वाग्र
S.K.S.035
जिह्वामूलऽधिजिह्वायामुपजिह्वाग्रतस्तथा ।

## उपदन्तिका
S.K.S.123
सैन्धवं च वचा व्याघ्री सुरसा चोपदन्तिका ।

## उपदेश
A.P.015
यो जानात्यनयोस्सारं सद्गुरोरुपदेशतः ।
A.Y.002/112
सुप्तोत्थितः प्रत्यूषे ह्युपदेशात् विना प्रबुद्ध्यते ।
H.R.004/049
बिन्दुमोक्षोपदेशादि व्यवहारोऽपि मायया ।

## उपदेशश्रवण
A.Y.002/048
गुरूपदेशश्रवणाच्छिष्यस्तत्त्वमयस्तथा ।

## उपद्रव
H.R.002/019
भवेत्स्वच्छन्ददेहः स्यात्सर्वोपद्रववर्जितः ।
S.SV.310
उत्पातोपद्रवा भीतिरल्पा वृद्धिः स्युरीतयः ।

## उपद्रववर्जित
S.SV.091
निवर्तते सुखी चैव सर्वोपद्रववर्जितः ।

## उपनिषद्
A.Y.002/025
विन्दन्त्यनात्मनोऽभावं वेदान्तोपनिषद्विदः ।

## उपवास
H.R.003/003
व्रतोपवासकाद्याश्च कायिका नियमाः स्मताः ।
S.K.S.066
दशोपवासं फलदं ज्ञातव्यं श्रीशिवोदितम् ।
S.K.S.094
उदानेनैव वमनमुपवासफलप्रदम् ।
S.K.S.131
मासोपवासपुण्यं हिं लभते येन तत्क्षणात् ।

## उपाङ्ग
Y.Y.004/057
अग्निभिः सह सर्वत्र साङ्गोपाङ्गकलेवरे ।

## उपादान
H.R.004/055
उपादानं प्रपञ्चस्य संसक्ताः परमाणवः ।
Y.Y.004/068
हानोपादानचेष्टादि व्यानकर्मेति चेष्यते ।

## उपाय
A.Y.001/002
जीवन्मुक्तिप्रदोपायं कथयस्व मम प्रभो ।
S.SV.351
काले दूरस्थितो वापि येनोपायेन लक्ष्यते ।
Y.B.018
तस्माद् दोषविनाशार्थमुपायं कथयामि ते ।
Y.B.081
न वशो जायते प्राणः सिद्धोपायं विना प्रिये ।





Y.B.082
उपायं तस्य विज्ञाय योगमार्गे प्रवर्तते ।
Y.Y.006/036
किंचित्प्राणजयोपायं तव वक्ष्यामि तत्त्वतः ।
Y.Y.006/036
एषः प्राणजयोपायः सर्वमृत्यूपघातकः ।

## उपायग्रहण
Y.Y.002/019
धर्मार्थमात्मसिद्धयर्थमुपायग्रहणं व्रतम् ।

## उपासना
A.Y.002/049
तस्मादुपासनात् सम्यक् सहजं प्राप्यते गुरोः ।
H.R.004/031
ब्रह्माण्डपिण्डाण्डायोः साङ्ख्योपासनाय...।
S.SV.115
भ्रष्टकार्ये सुरापाने वीरमन्त्राद्युपासने ।

## उपाधि
A.Y.001/025
सर्वोपाधिविनिर्मुक्तंसर्वकामविवर्जितम् ।
G. P.002/076
उपाधितत्त्वमुक्तानि कुर्वन्त्यष्टगुणोदयम् ।
G. P.002/081
उपाधिश्च तथा तत्त्वं द्वयमेतदुदाहृतम् ।
G. P.002/081
उपाधिः प्रोच्यते वर्णस्तत्त्वमात्माभिधीयते ।
G. P.002/082
उपाधेरन्यथा ज्ञानतत्त्वसंस्थितिरन्यथा ।
G. P.002/082
समस्तोपाधिविध्वंसी सदाभ्यासेन जायते ।
Y.M.170
उपाधितत्त्वयुक्तानि कुर्वन्त्यष्टगुणोदयम् ।
Y.M.171
उपाधिः प्रोच्यते वर्णः तत्त्वमात्माभिधीयते ।
Y.M.171
उपाधिस्थतथा तत्त्वं द्वयमेतमुदाहृतम् ।
Y.M.172
समस्तोपाधि निर्मुक्तं तत्तत्त्वं योगिनो विदुः ।
Y.M.172
उपाधिरन्यथा ज्ञानं तत्त्व संस्थितिरन्यथा ।
Y.M.173
उपाधिवर्णयोगेन दृश्यते स्फटिको मणिः ।

## उभय
S.SV.128
उभयोरेव सञ्चारं विषवत्तं विदुर्बुधाः ।

## उमा
Y.V.007
उमाशङ्करपुत्रोऽहं मीननाथो मुनीश्वरः ।

## उमार्धदेह
Y.Y.008/024
उमार्धदेहं वरदं सर्वकारणकारणम् ।

## उष्ण
H.R.001/073
कट्वम्लतिक्तलवणोष्ण हरीतशाक...।
S.SV.164
कवोष्णः पार्थिवो वायुः स्थिरकार्यप्रसाधकः ।
S.SV.166
आवर्त्तगश्चात्युष्णश्च शोणाभश्चतुरङ्गुलः ।
S.SV.167
उष्णः शीतः कृष्णवर्णस्तिर्यग्गाम्यष्टकाङ्गुलः ।
Y.B.037
शीतोष्णसुखदुःखाद्यैर्व्याधिभिर्मानवैस्तथा ।

## उष्णवारि
S.K.S.091
समं समं चूर्णयित्वा प्रपिबेदुष्णवारिणा ।
S.K.S.107
शीतं ज्वरे तु तत्कार्यं पीडायामुष्णवारिणा ।
Y.R.203
कर्णनादेः शिरस्तालैरुष्णवारिनिषेचनैः ।

## ऊ

## ऊरु
G. P.001/012
वामोरूपरि दक्षिणं च चरणं संस्थाप्य वामं तथा...।
H.R.003/034
ऊर्वोपरि विप्रेन्द्र कृत्वा पादतले उभे ।
H.R.003/035
उत्तानौ चरणौ कृत्वा उर्वोः संस्थाप्य यत्नतः ।

**H.R.003/035**
ऊरु मध्ये ततो स्थानौ पाणी कृत्वा ततो दृशौ ।
**H.R.003/052**
जानूर्वोरन्तरं सम्यक् कृत्वा पादतले उभे ।
**H.R.003/053**
एकपादमथैकस्मिन् विन्यसेदूरुणि स्थिरम् ।
**H.R.003/053**
इतरस्मिन्स्तथा चोरुं वीरासनमितीरितम् ।
**H.R.003/072**
पद्मासनं सुसंस्थाप्य जानूर्वोरन्तरे तथा ।
**Y.R.037**
वामोरूपरि दक्षाङ्घ्रिं विन्यसेत्तस्य चोपरि ।
**Y.R.037**
दक्षोरौ वामपदं च संस्थाप्याञ्जलिसम्पुटम् ।
**Y.R.040**
वामोरूपरि संयोज्यं वीरासनमितीरितम् ।
**Y.Y.003/003**
जानोर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ।
**Y.Y.003/007**
उर्वोरुपरि विप्रेन्द्रे कृत्वा पादतले उभे ।
**Y.Y.003/008**
एकं पादमथैकस्मिन्विन्यस्योरुणि संस्थितम् ।
**Y.Y.003/008**
इतरस्मिंस्तथा चोरुं वीरासनमुदाहृतम् ।
**Y.Y.004/052**
अपानिलयं केचिद् गुदमेढ्रोरुजानुषु ।
**Y.Y.006/060**
जङ्घोर्वोरन्तरं गार्गि निश्छिद्रं बन्धयेद्दृढम् ।

## ऊरुतल

**Y.R.040**
दक्षिणोरुतले पादं वामं विन्यस्य दक्षिणम् ।

## ऊरुद्वय

**Y.Y.007/009**
चित्योर्मूलं च जान्वोश्च मध्ये चोरुद्वयस्य च ।

## ऊरुमध्य

**Y.Y.007/014**
ऊरुमध्यात्तथा गार्गि पायुमूलं नवाङ्गुलम् ।
**Y.Y.007/014**
जान्वोर्नवाङ्गुलं प्राहुरूरुमध्यं मुनीश्वराः ।

## ऊरुमूल

**H.R.003/056**
वामोरुमूलार्पित दक्षपादं जान्वोर्बहिर्वेष्टित दक्षदोष्णा ।
**Y.Y.007/028**
देहमध्याद्गुदे गार्गि गुदादेवोरुमूलके ।
**Y.Y.007/028**
ऊरुमूलत्तयोर्मध्ये तस्माज्ज्ञान्वोनिरोधयेत् ।

## ऊरुस्थान

**S.SV.252**
ऊरुस्थानेऽग्नितत्त्वेन करस्थाने च वायुना ।

## ऊर्ध्व

**A.P.008**
केचित्काष्ठा प्रविष्टा युवतिभगतद्बिन्दुमूर्ध्वं नयन्ति ।
**A.P.030**
कण्ठे बन्धं समारोप्याधाराद्वायुमूर्ध्वतः ।
**A.P.035**
अयं च सर्वनाडीनामूर्ध्वं गतिविशोधनः ।
**A.Y.001/059**
ऊर्ध्वपश्चिममार्गेण वातरोधेन जाग्रती ।
**G. P.001/039**
प्राणापानवशो जीवो ह्यधश्चोर्ध्वं च धावति ।
**G. P.001/041**
ऊर्ध्वाधः संस्थितावेतौ संयोजयति योगवित् ।
**G. P.001/049**
सूचीव गुणमादाय व्रजत्यूर्ध्वं सुषुम्णया ।
**G. P.001/050**
प्रबुद्धा वह्नियोगेन व्रजत्यूर्ध्वं सुषुम्णया ।
**G. P.001/052**
वारम्वारमपानमूर्ध्वमनिलं प्रोच्चारयेत्पूरितं ।
**G. P.001/054**
अद्वादूर्ध्वं भवेत्सिद्धो नात्र कार्या विचारणा ।
**G. P.001/056**
कन्दोर्ध्वे कुण्डलीशक्ति शुभमोक्षप्रदायिनी ।
**G. P.001/068**
खेचर्या मुद्रया येन विवरं लम्बिकोर्ध्वतः ।
**G. P.001/070**
व्रजत्यूर्ध्वं हते शक्त्या निरुद्धो योनिमुद्रया ।
**G. P.001/081**
अपानमूर्ध्वमाकृष्य मूलबन्धो विधीयते ।





**G. P.002/008**
ऊर्ध्वमाकृष्य चापानवायुं प्राणे नियोजयेत् ।
**G. P.002/008**
ऊर्ध्वमानीयते शक्त्या सर्वपापैः प्रमुच्यते ।
**G. P.002/034**
ऊर्ध्वं नाभिरधस्तालुरूर्ध्वं भानुरधःशशी ।
**G. P.002/037**
दूर्ध्वास्यो रसनां निधाय विधिवच्छक्तिं परां चिन्तयेत् ।
**G. P.002/037**
ऊर्ध्वं षोडशपत्रपद्मगलितं प्रायादवाप्तं हठा...।
**G. P.002/043**
बद्धं सोमकलाजलं सुविमलं कण्ठस्थलादूर्ध्वतो ।
**G. P.002/047**
सर्वाधाराणि बध्नाति तदूर्ध्वं धारितं महत् ।
**G. P.002/049**
ऊर्ध्वं प्रवर्तते रेतोऽप्यणिमादिगुणोदयः ।
**G. P.002/075**
गुदं मेढ्रं च नाभिश्च हृत्पद्मं च तदूर्ध्वतः ।
**H.R.002/039**
कण्ठे बन्धं समारोप्य पूरयेद्वायुमूर्ध्वतः ।
**H.R.002/055**
उदरे पश्चिमं ताणं नाभेरूर्ध्वं च धारयेत् ।
**H.R.002/059**
अधोगतिमपानं वै ऊर्ध्वगं कुरुते बलात् ।
**H.R.002/062**
अपाने चोर्ध्वगं जाते प्रयाते वह्निमण्डले ।
**H.R.002/068**
ऊर्ध्वं नाभिरधस्तालुरूर्ध्वं भानुरधः शशी ।
**H.R.002/086**
वायुसञ्चारणे जाते ऊर्ध्वमाकृष्यते बलात् ।
**H.R.002/089**
नार्या भगात् पतद्बिन्दुमभ्यासेनोर्ध्वमाहरेत् ।
**H.R.002/090**
चलितं च निजं बिन्दुमूर्ध्वमाकृष्य रक्षयेत् ।
**H.R.002/101**
ततः परं समर्थःस्यादूर्ध्वं आकुञ्चयेद्रजः ।
**H.R.002/106**
वज्रोली मैथुनादूर्ध्वं स्त्रीपुंसोश्चाङ्गलेपनम् ।
**H.R.002/110**
निद्रां विहाय सा ऋज्वी ऊर्ध्वमुत्तिष्ठते हठात् ।
**H.R.002/114**
ऊर्ध्वमाकृष्य तौ किंचित्सुषुम्ना कुण्डलीगता ।
**H.R.003/038**
वारं वारमपानमूर्ध्वमनिलं प्रोच्चाल्यत्पूरितम् ।
**S.K.S.106**
नाभौ पात्रं तु संस्थाप्य चोर्ध्वतो धारया जलम् ।
**S.K.S.113**
ऊर्ध्वमाकर्षयेत्तेन नालनौली शिवोदिता ।
**S.SV.033**
ततो दशोर्ध्वगा नाड्योदशैवाधः प्रतिष्ठिताः ।
**S.SV.035**
तिर्यगूर्ध्वास्तथा नाड्यो वायुदेहसमन्विताः ।
**S.SV.134**
पुरो वामोर्ध्वतश्चन्द्रो दक्षाधः पृष्ठतो रविः ।
**S.SV.135**
ऊर्ध्ववामाग्रतो दूतो ज्ञेयो वामपथे स्थितः ।
**S.SV.154**
मध्ये पृथ्वी ह्यधश्चापश्चोर्ध्वं वहति चानलः ।
**S.SV.159**
ऊर्ध्वं मृत्युरधः शान्तिस्तिर्यगुच्चाटनं तथा ।
**S.SV.341**
...सोऽवश्यं विशतीह कालवदनं संवत्सरादूर्ध्वतः ।
**Y.B.116**
वारं वारं तथाचोर्ध्वं समायाति समीरणः ।
**Y.B.120**
नाभेरूर्ध्वमधश्चापि, प्राणं कुर्यात्प्रयत्नतः ।
**Y.M.016**
ऊर्ध्वं मेढ्रादधो नाभेः कन्दो...खगाण्डवत् ।
**Y.M.027**
प्राणापानवशाच्छ्वासो अधश्चोर्ध्वं प्रधावति ।
**Y.M.030**
ऊर्ध्वं चाधःस्थितावेतौ यो जानाति स योगवित् ।
**Y.M.039**
सूचीव गुणमादाय व्रजत्युर्ध्वं सुषुम्नया ।
**Y.M.042**
पारं...समूर्ध्नि (वारंवारमपानमूर्ध्वं) मनिलं...पूरितम् ।
**Y.M.045**
कन्दोर्ध्वं कुण्डली शक्तिरष्टधा कुण्डलीकृता ।
**Y.M.048**
अपानमुर्ध्वमाकृष्य मूलबन्धो निगद्यते ।

Y.M.098
ऊर्ध्वमाकृष्य चापानं वायुं प्राणेन योजयेत् ।
Y.M.123
ऊर्ध्वं नाभिरधस्तालु रूर्ध्वं भानुरधश्शशी ।
Y.M.126
ऊर्ध्वं षोडशपद्मपत्रगलितं प्राणादवाप्तं हठात् ।
Y.M.126
ऊर्ध्वास्ये रसनां नियम्य विवरे शक्तिं परां चिन्तयन् ।
Y.M.131
बद्धवा सोमकलाजलं सुविमलं कर्णस्थलादूर्ध्वतो ।
Y.M.132
ऊर्ध्वास्ये भ्रुवसन्निवेश नयने सिंक्ताङ्गगात्रं पिबेत् ।
Y.M.133
ऊर्ध्वजिह्वास्ततो भूत्वा सोमपानं करोति यः ।
Y.M.137
सर्वद्वाराणि बध्नाति यद्ध्र्वं तु बिलं धृतम् ।
Y.M.140
ऊर्ध्वं प्रवर्तते तस्य अणिमादिगुणोदयः ।
Y.M.169
गुदं मेढ्रश्च नाभिश्च हृदयं चक्रमूर्ध्वतः ।
Y.R.082
तस्याः प्राणस्तथापानो वहत्यूर्ध्वमधस्तथा ।
Y.R.086
सिद्धासने स्थितोऽपानं बलादूर्ध्वं विकर्षयेत् ।
Y.R.094
तेनापानो व्रजेदूर्ध्वं प्राणस्यसदनं प्रति ।
Y.R.097
सुषुम्नायां तदा प्राणो विशेदूर्ध्वं न संशयः ।
Y.R.100
तथातथा वेदूर्ध्वं शीघ्रं प्राणस्य रोहणम् ।
Y.R.189
अनेनापानवायुस्तु व्रजेदूर्ध्वं न संशयः।
Y.R.191
कुण्डलीं बोधयित्वाथ क्रमादूर्ध्वं प्रधावति ।
Y.R.193
ततो बुद्ध्या नयेदूर्ध्वं भ्रूमध्यं योगवित्तमः ।
Y.R.259
तं ध्यानेनोर्ध्वमानीय ब्रह्मरन्ध्रे प्रवेशयेत् ।
Y.Y.004/014
गुदात्तु द्व्यङ्गुलादूर्ध्वमधो मेढ्राच्च द्व्यङ्गुलात् ।
Y.Y.004/021
तस्योर्ध्वं कुण्डलीस्थानं नाभेस्तिर्यगथोर्ध्वतः ।
Y.Y.004/039
अधश्चोर्ध्वं च कुण्डल्या वारुणी सर्वगामिनी ।
Y.Y.004/040
पिङ्गला चोर्ध्वगा याम्ये नासान्तं विद्धि मे प्रिये ।
Y.Y.004/042
सरस्वती तथा चोर्ध्वमाजिह्वायाः प्रतिष्ठिता ।
Y.Y.004/051
अधश्चोर्ध्वं च कुण्डल्याः परीतः प्राणसंज्ञकः ।
Y.Y.004/053
अधश्चोर्ध्वं च कुण्डल्याः प्रकाशयति दीपवत् ।
Y.Y.006/051
अपानमूर्ध्वमाकृष्य प्रणवेन समाहितः ।
Y.Y.007/019
ललाटाख्यं भ्रुवोर्मध्यादूर्ध्वं स्यादङ्गुलद्वयम् ।
Y.Y.012/014
ततो नयेदपानं तु नाभेरूर्ध्वमिदं स्मरन् ।

## ऊर्ध्वगति

H.R.002/047
अयं च सर्व नाडीनामूर्ध्वगतिविबोधकः ।

## ऊर्ध्वगा

H.R.002/114
षण्मासाच्चालनेनैव शक्तिःस्यादूर्ध्वगाभवेत् ।
Y.Y.004/042
आसव्यकर्णाद्विप्रेन्द्रे शङ्खिनी चोर्ध्वगा मता ।

## ऊर्ध्वगामिन्

Y.V.019
रसनापीड्यमानास्तु षोडशश्चोर्ध्वगामिनी ।

## ऊर्ध्वचक्री

S.K.S.015
ऊर्ध्वचक्री मध्यचक्री तथाधश्चक्रिका परा ।
S.K.S.033
पुनः पुनः क्षाल्येच्चेदूर्ध्वचक्री प्रकीर्तिता ।

## ऊर्ध्वचार

S.SV.321
ऊर्ध्वचारस्थितो जीवो जीवो याति यमालयम् ।





## ऊर्ध्वजिह्वा

G. P.002/044
ऊर्ध्वजिह्वां स्थिरीकृत्य सोमपानं करोति यः।

## ऊर्ध्वत्रोटन

S.K.S.017
त्रोटनं त्रिविधं प्रोक्तमूर्ध्वत्रोटनकंतथा ।

## ऊर्ध्वनास

Y.V.020
त्रिशिखं वज्रमोङ्कारमूर्ध्वनासं भ्रुवोर्मुखम् ।

## ऊर्ध्वपद

A.P.063
रविरूर्ध्वपदं याति बिन्दुना याति वश्यताम् ।

## ऊर्ध्वफल

Y.M.135
बध्दमूर्ध्वफलं येन तेन मृत्युं निवारितम् ।

## ऊर्ध्वभाग

S.SV.171
रक्तंत्रिकोणं तीक्ष्णं च ऊर्ध्वभागप्रवाहकम् ।

## ऊर्ध्वभेद

A.Y.002/015
ऊर्ध्वमुष्टिंरधोदृष्टिरूद्धर्वभेदस्त्त्वधः शिराः ।

## ऊर्ध्वमुख

G. P.002/033
वर्षत्यधोमुखश्चचन्द्रो ग्रसत्यूर्ध्वमुखो रविः ।
Y.M.122
वर्षत्यधोमुखं चन्द्रो ग्रसत्यूर्ध्वमुखो रविः ।
Y.Y.012/017
सहस्रपत्रस्य मुखं प्रविश्य कुर्यात्पुनस्तूर्ध्वमुखं द्विजिह्वः ।

## ऊर्ध्वमुष्टि

A.Y.002/015
ऊर्ध्वमुष्टिंरधोदृष्टिरूद्धर्वभेदस्त्त्वधः शिराः ।

## ऊर्ध्वरोगनाश

S.K.S.034
नेत्रकर्णाद्यूर्ध्वरोगनाशनं मलशोधनम् ।

## ऊर्ध्वरोहण

Y.R.109
मेरुदण्डे तथावायोः स्पर्शःस्यादूर्ध्वरोहणे ।

## ऊर्ध्ववाही

S.SV.166
ऊर्ध्वं वाही च यः क्रूरः कर्मकारी स तैजसः ।

## ऊर्ध्वसिद्धि

S.K.S.019
तथोर्ध्वसिद्धिकारिणी कर्माधःसिद्धिकारिणी ।

## ऊर्ध्वास्य

G. P.002/043
ऊर्ध्वास्यो भुवि सन्निपत्य नितरामुत्तानपादःपिबे...।

# ऋ

## ऋक्

Y.Y.012/027
भ्रुवोन्तरे विष्णुपदे ऋचौ (?रुचौ) तु मनो लयं...प्रबुद्धे ।

## ऋजुकाय

H.R.003/052
ऋजुकायः सुखासीनः स्वस्तिकं तत्प्रचक्षते ।
H.R.003/084
ऋजुकायः समासीनः प्राणायामान्समभ्यसेत् ।
Y.Y.003/003
ऋजुकायः सुखासीनः स्वस्तिकं तत्प्रचक्षते ।

## ऋजुता

H.R.002/063
दण्डहता भुजङ्गीव निश्वस्य ऋजुतां व्रजेत् ।

## ऋजुभूत

A.P.031
ऋजुभूता तदा शक्तिः कुण्डली सहसा भवेत् ।

## ऋज्वी

H.R.002/040
ऋज्वीभूता तथा शक्तिः कुण्डली सहसा भवेत् ।
H.R.002/110
निद्रां विहाय सा ऋज्वी ऊर्ध्वमुत्तिष्ठते हठात् ।

**ऋणिन्**

Y.Y.001/028

ते देवानामृषीणां च पितृणामृणिनस्तथा ।

**ऋत्वारम्भ**

S.SV.291

ऋत्वारम्भे रविः पुंसां स्त्रीणां चैव सुधाकरः ।

S.SV.292

ऋत्वारम्भे रविः पुंसां शुक्रान्ते च सुधाकरः ।

**ऋत्**

H.R.003/003

स्नानं शौचं ऋतं सत्यं जपो होमश्च तर्पणम् ।

Y.Y.008/029

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गल्म् ।

**ऋतु**

Y.Y.001/057

ऋतावृतौ स्वदारेषु सङ्गतिर्या विधानतः ।

**ऋतुकाल**

H.R.002/094

ऋतुकाले यथा शुक्लं निर्दोषं योनिसङ्गतम् ।

S.SV.286

ऋतुकालभवा नारी पञ्चमेऽह्नि यदा भवेत् ।

**ऋतुत्रय**

Y.Y.006/022

ऋतुत्रयात्पुनन्त्येनं जन्मान्तरकृतादघात् ।

**ऋतुदान**

S.SV.288

ऋतुस्नाता पिबेन्नारी ऋतुदानं तु योजयेत् ।

S.SV.289

सुषुम्नासूर्यवाहेन ऋतुदानं तु योजयेत् ।

**ऋतुमती**

H.R.002/093

ऋतुमत्या रजोऽप्येवं रजो बिन्दुं च रक्षयेत् ।

**ऋतुस्नाता**

S.SV.288

ऋतुस्नाता पिबेन्नारी ऋतुदानं तु योजयेत् ।

**ऋत्वारम्भ**

S.SV.291

ऋत्वारम्भे रविः पुंसां स्त्रीणां चैव सुधाकरः ।

S.SV.292

ऋत्वारम्भे रविः पुंसां शुक्रान्ते च सुधाकरः ।

**ऋत्विक्**

A.Y.002/007

चित्तं बुद्धिरहङ्कार ऋत्विक् सोमश्च पंचमः ।

**ऋषि**

Y.Y.001/005

ब्रुवन्तं परमात्मानमृषीणामुग्रतेजसाम् ।

Y.Y.001/007

सभामध्यगता चेयमृषीणामुग्रतेजसाम् ।

Y.Y.001/009

ऋषीनालोक्य नेत्राभ्यां वाक्यमेतदभाषत ।

Y.Y.001/028

ते देवानामृषीणां च पितृणामृणिनस्तथा ।

Y.Y.001/028

ऋषिभ्यो ब्रह्मचर्येण पितृभ्यश्च सुतैस्तथा ।

Y.Y.001/041

पुनः प्राह मुनिश्रेष्ठमृषिमध्ये वरानना ।

Y.Y.001/045

समाहितमना गार्गि ऋषिभिः सह संशृणु ।

Y.Y.001/054

अस्तेयमिति सा प्रोक्ता ऋषिभिस्तत्त्वदर्शिभिः ।

Y.Y.002/004

या धीस्तामृषयः प्राहुः सन्तोषं सुखलक्षणम् ।

Y.Y.002/018

ऋषिं छन्दोऽधिदैवं च ध्यायन्मन्त्रं च सर्वदा ।

Y.Y.011/001

ऋषिमध्ये वरारोहा वाक्यमेतदभाषत ।

Y.Y.011/011

ऋषीनालोक्य नेत्राभ्यां वाक्यमेतदभाषत ।

Y.Y.011/012

गच्छन्तु साम्प्रतं सर्वे ऋषयः स्वाश्रमं प्रति ।

Y.Y.012/026

ऋषयः सिद्धगन्धर्वाः प्रकाशं यान्ति योगिनाम् ।





**ए**

**एक**

A.Y.002/029

तत्रैकनाशादपरस्य नाशः एक प्रवृत्तेरपरप्रवृत्तिः ।

H.R.004/005

अनन्तमेकं वचसामगम्यं...श्रीगुरुनाथ एव ।

Y.Y.012/046

यदेकमव्यक्तमनन्तमच्युतं प्रपञ्चजन्मादिकृदप्रमेयम् ।

**एकचित्त**

S.SV.054

अनेन लक्षयेद्योगी चैकचित्तः समाहितः ।

**एकजन्मकृत्**

Y.Y.012/038

एकजन्मकृतं पापं दिनेनैकेन नश्यति ।

**एकतान**

Y.R.248

कर्णयोस्त्वेकतानेन रोधनं नैव कारयेत् ।

**एकतानता**

Y.R.043

आसनं त्वेकतानेन कृतं दुःखावहं भवेत् ।

**एकत्व**

G. P.001/074

याति बिन्दोः सहैकत्वं भवेद्दिव्यं वपुस्ततः ।

G. P.001/075

तयोः समरसैकत्वं यो जानाति स योगवित् ।

Y.M.177

तथा समरसैकत्वं समाधिः सोऽभिधीयते ।

**एकदण्ड**

A.Y.002/035

एकदण्डत्रिदण्डादि जटाभस्मादिकं तथा ।

**एकदृष्टि**

Y.Y.012/024

शक्तिं सदा दीपवद्...ब्रह्मविदेकदृष्ट्या ।

**एकदेश**

Y.R.138

सर्वतो विनियम्यैकदेशे चित्तस्य बन्धनम् ।

**एकधी**

H.R.002/049

महाबन्धस्थितो योगी कृत्वा पूरकमेकधीः ।

Y.R.066

घटिकात्रितयं नित्यं पथ्यपूर्वकमेकधीः ।

**एकपाद**

H.R.003/011

निरालम्बन चान्द्राख्यं काण्ठवं चैकपादकम् ।

H.R.003/016

पञ्चचूली कुक्कुटं च एकपादककुक्कुटम् ।

H.R.003/062

प्रसार्यैकं पादतलं संस्थाप्यैकपादकम् ।

H.R.003/063

करौ सम्पुटितौ कृत्वा एकपादं तदुच्यते ।

**एकपादमयूर**

H.R.003/009

एकपादमयूरं च षण्मयूरमिहोच्यते ।

H.R.003/045

एक पादं मयूराग्रे प्रसार्यैकं मयूरतः ।

H.R.003/046

कण्ठे पदं प्रासार्यैवं एकपादं मयूरके ।

**एकपुट**

S.SV.333

त्रिरात्रं वहते यस्य वायुरेकपुटे स्थितः ।

**एकरूप**

Y.Y.012/032

हृत्पङ्कजे व्योम्नि यदेकरूपं सत्यं सदानन्दमयं सुसूक्ष्मम् ।

**एकरूपत्व**

Y.Y.001/064

प्रवृत्तौ वा निवृत्तौ वा एकरूपत्वमार्जवम् ।

**एकलक्षजप**

A.P.026

एकलक्षजपान्मृत्युं नाशयेदतिदारुणम् ।

### एकश्वसन
**G. P.002/001**
एकश्वसनमात्रेणोद्घाटयेद्गगने गतिम् ।

### एकस्तम्भ
**G. P.001/014**
एकस्तम्भं नवद्वारं गृहं पञ्चाधिदैवतम् ।

### एकाक्षर
**S.SV.392**
एकाक्षरप्रदातारं नाडीभेदविवेचकम् ।
**Y.Y.006/076**
एकाक्षरं परं ब्रह्म ध्यायन्प्रणवमीश्वरम् ।
**Y.Y.010/017**
ओमित्येकाक्षरं बुद्ध्या व्याहरन्सुसमाहितः ।

### एकाक्षरमन्त्र
**A.P.025**
अह (ओ) मिति एकाक्षरं मन्त्रं तच्चप्रणवादिकम् ।

### एकाग्र
**Y.R.247**
निमील्य नयने चित्तं कृत्वैकाग्रमनन्यधीः ।

### एकाग्रमानस
**Y.R.272**
तथैव त्राटकाभ्यासं कुर्यादेकाग्रमानसः।

### एकान्त
**G. P.001/083**
नासाग्रदृष्टिरेकान्ते जपेदोङ्कारमव्ययम् ।
**H.R.001/067**
एकान्तमठिकामध्ये स्थातव्यं हठयोगिना ।
**S.SV.352**
एकान्त विजनं गत्वा कृत्वाऽऽदित्यं च पृष्ठतः ।
**Y.R.054**
जपेदेकान्तगः सोऽयं चन्द्रभेदनमुच्यते ।
**Y.R.140**
शरीरे धारणां कुर्यादेकान्तेसुसमाहितः।

### एकान्तवासिन्
**Y.R.156**
योगिनां क्षीणपापानां नित्यमेकान्तवासिनाम् ।
**Y.R.299**
पथ्याशिनो विरक्तस्य शान्तस्यैकान्तवासिनः ।

### एकीभूतचित्त
**A.P.053**
एकीभूतं तदा चित्तं राजयोगाभिधानकम् ।

### एरण्डपत्र
**S.K.S.093**
यद्वा एरण्डपत्रस्य नालं कण्ठे प्रवेशयेत् ।

### एला
**S.K.S.127**
मरिचं तोयकृष्णैला गायत्रीभिः सुसाधितैः ।

## ऐ

### ऐक्य
**G. P.002/085**
यत्सर्वं द्वन्द्वयोरैक्यं जीवात्मपरमात्मनोः ।
**H.R.002/076**
अपानप्राणयोरैक्यं कार्यं वज्रोल्किर्मणा ।
**Y.M.176**
तथात्ममनसोरैक्यं समाधिः सोऽभिधीयते ।

### ऐश्वर्य
**H.R.002/035**
आदिनाथोदिता मुद्राः अष्टैश्वर्यप्रदायिकाः ।
**S.SV.213**
ज्ञानं त्रिकालविषयमैश्वर्यमणिमादिकम् ।
**Y.M.102**
धारणायां मनोधैर्यं ध्यानादैश्वर्यमद्भुतम् ।

### ॐ
**H.R.001/001**
ॐ श्री आदिनाथं नत्वाऽथ श्रीनिवासो महामतिः ।

### ॐकार
**A.Y.002/111**
ॐकारप्रमुखैर्विचित्रकरणैः प्रायस्य वा यो जपः ।
**G. P.002/004**
रेचकेदश ॐकाराः प्राणायामः स उच्यते ।





## ओ

### ओङ्कार
**G. P.001/083**
नासाग्रदृष्टिरेकान्ते जपेदोङ्कारमव्ययम् ।
**Y.M.072**
नासाग्रे दृष्टिरेकाकी जीवे (जपेत्) दोङ्कारमव्ययम् ।
**Y.M.077**
शुचिर्वाप्यशुचिर्वापि जपेदोङ्कारमव्ययम् ।
**Y.V.020**
त्रिशिखं वज्रमोङ्कारमूर्ध्वनासं भ्रुवोर्मुखम् ।
**Y.Y.012/034**
मूर्धानमुद्भिद्य पुनः खमध्ये प्राणांस्त्यजोङ्कारम्...।

### ओड्याण
**Y.M.046**
महामुद्रा नभोमुद्रा ओड्याणं च जलन्धरम् ।
**Y.M.049**
ओड्याणं कुरुते यस्मादविश्रान्तं महाखगः ।
**Y.M.049**
ओड्याणं च तथैव स्यात्तच्च बद्धो विधीयते ।
**Y.M.050**
ओड्याणाख्यो स्वयं बद्धो मृत्युमातङ्गकेसरी ।

### ओदन
**A.P.007**
हस्तिन्यास्तुरगः खराश्च करभः शाल्योदनं कोद्रवात् ।

### ओम्
**A.P.001**
ओं नमोऽस्त्वादिनाथाय मीननाथाय वै नमः ।
**A.P.025**
अह (ओ) मिति एकाक्षरं मन्त्रं तच्चप्रणवादिकम् ।
**G. P.001/084**
यस्य मात्रासु तिष्ठन्ति तत्परं ज्योतिरोमिति ।
**G. P.001/085**
त्रयो देवाः स्थिता यत्र तत्परं ज्योतिरोमिति ।
**G. P.001/086**
त्रिधाः शक्तिस्थिता यत्र तत्परं ज्योतिरोमिति ।
**G. P.001/087**
त्रिधा मात्रा स्थिता यत्रतत्परं ज्योतिरोमिति ।
**G. P.001/088**
मनसा तत्स्मरेन्नित्यं तत्परं ज्योतिरोमिति ।
**Y.M.073**
त्रयो वर्णाः स्थिता यत्र तत्परं ज्योतिरोमिति ।
**Y.M.074**
त्रयो वर्णाः स्थिता यत्र तत्परं ज्योतिरोमिति ।
**Y.M.075**
त्रयो देवा स्थिता यत्र तत्परं ज्योतिरोमिति ।
**Y.M.076**
मनसा यत्स्मरेन्नित्यं तत्परं ज्योतिरामिति ।
**Y.Y.010/017**
ओमित्येकाक्षरं बुद्ध्या व्याहरन्सुसमाहितः ।

### ओषधि
**A.P.005**
ओषध्योऽध्यात्मकश्चेति राजयोगो द्विधा क्वचित् ।
**A.P.011**
यदि जीवेदोषधीभिः संसारे निरुपद्रवे ।

### ओष्ठ
**S.SV.283**
सूर्यचन्द्रौ समाकृष्य सर्पाक्रान्त्याऽधरोष्ठयोः ।

## औ

### औघनाश
**Y.M.051**
ततो जालन्धरो बन्धः कण्ठदुःखौघनाशनः ।

### औदासीन्य
**H.R.004/026**
तत्त्वं बीजं हठं क्षेत्रं औदासीन्यं जलं त्रिभिः ।

### औषध
**S.K.S.079**
औषधस्नेहतोयैश्च केवलं वाथ पाणिना ।
**Y.B.102**
...संसाररोगहरमौषधमद्वितीयम् ।

### औषधि
**A.P.012**
अमनस्कौषधि...व...कथमखिलं गतं तत्क्षयो भवति ।

S.SV.104
शान्तिके पौष्टिके चैव दिव्यौषधिरसायने ।
Y.B.174
रसौषधिक्रियाकालमन्त्रक्षेत्रादिसाधनात् ।

## औष्ट्र

S.K.S.026
औष्ट्रं नलप्रवेशश्च फूत्कृतिस्तदनन्तरम् ।

## क

## क

Y.V.012
नासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वर...।

## कटि

A.P.038
पुनरास्फालनं कट्यां सुस्थिरं कण्ठमुद्रया ।
S.K.S.072
एवं कट्यां कृतं कर्म चक्रत्रोटनकं भवेत् ।
Y.Y.004/052
उदरे वृषणे कट्यां जङ्घेनाभौ वदन्ति हि ।

## कठिन

Y.B.169
अहङ्कारलये तत्र देहे कठिनता कुतः ?

## कठिनविद्या

S.SV.114
कठिनक्रूर विद्यानां पठने पाठने तथा ।

## कणभुक्

H.R.001/002
साङ्ख्ये सारस्वतीये कणभुगभिहिते, तत्त्वचिन्तामणिज्ञः...।

## कणसङ्ग्रह

S.SV.104
स्वस्वामिदर्शने मित्रे वाणिज्ये कणसङ्ग्रहे ।

## कण्टक

S.SV.091
न हानिः कलहो नैव कण्टकैर्नापि भिद्यते ।

## कण्ठ

G. P.001/016
कण्ठे स्यात् षोडशदलं भ्रूमध्ये द्विदलं तथा ।
G. P.002/041
अतः कण्ठे विशुद्धाख्यं चक्रं चक्रविदो विदुः ।
G. P.002/043
बद्धं सोमकलाजलं सुविमलं कण्ठस्थलादूर्ध्वतो ।
G. P.002/055
अर्द्धेन्दुप्रतिमं च कुन्दधवलं कण्ठेऽम्बुतत्त्वं स्थितम् ।
H.R.002/009
अधस्तात् कुञ्चनेनाशु कण्ठ सङ्कोचने कृते ।
H.R.002/010
अपानमूर्ध्वमास्थाय प्राणं कण्ठादधो नयेत् ।
H.R.002/011
यथा लगति कण्ठात्तु हृदयावधि सस्वनम् ।
H.R.002/014
यथा लगति हृत्कण्ठहृदयावधि संस्थितः ।
H.R.002/032
कण्ठेन पूरयेद्वायुं रेचयेत्कण्ठनालतः ।
H.R.002/039
कण्ठे बन्धं समारोप्य पूरयेद्वायुमूर्ध्वतः ।
H.R.002/064
कण्ठमाकुञ्च्य हृदये स्थापयेद् दृढमिच्छया ।
H.R.003/046
कण्ठे पदं प्रासार्यैवं एकपादं मयूरके ।
H.R.003/063
एकं पादमथो कण्ठे उत्थाप्यैकं च दण्डवत् ।
H.R.003/064
पादाभ्यां वेष्टयेत्कण्ठं करयोः संस्थितो मुनिः ।
H.R.003/069
पादाभ्यां वेष्टयेत्कण्ठं हस्ताभ्यां पृष्ठबन्धनम् ।
S.K.S.036
कण्ठे चार्द्राङ्गुलिं क्षिप्त्वा भ्रामयेच्चापि पूर्ववत् ।
S.K.S.043
प्रवेशयेत्कण्ठमध्ये नासाद्वारेण तां कशाम् ।
S.K.S.049
कण्ठाद्वा तालुतो वापि समाकृष्य च तत्कफम् ।
S.K.S.088
...यावत्कण्ठं लौलिकां संविधाय ।
S.K.S.093
यद्वा एरण्डपत्रस्य नालं कण्ठे प्रवेशयेत् ।
S.K.S.108
शुद्धं तोयं नारिकेल...कण्ठं दुग्धमिश्रं जलं वा ।





S.SV.347
मध्याङ्गुलिनां त्रितयं न वक्रंरोगं...कण्ठ ।
Y.B.106
कण्ठे कफादिदोषघ्नं, शरीराग्निविवर्धनम् ।
Y.B.122
कण्ठमाकुञ्च्य हृदये, स्थापयेद्दृढमिच्छया ।
Y.M.052
जालन्धरे कृते बद्धे कर्ण (कण्ठ) सङ्कोचलक्षणे ।
Y.R.079
ततश्चैषा परावृत्त्या भ्रूकण्ठहृदयादिषु ।
Y.R.099
हृदयात्कण्ठमायाति कण्ठाद्भ्रूमध्यमेव च ।
Y.R.162
वनमालालसत्कण्ठं मकराकारकुण्डलम् ।

## कण्ठकूप

Y.R.088
चिबुकं कण्ठकूपस्य न्यसेदुपरि भागतः ।
Y.Y.006/073
हृदयात्कण्ठकूपे च भ्रुवोर्मध्ये च धारयेत् ।
Y.Y.007/010
नाभिश्च हृदयं गार्गि कण्ठकूपस्तथैव च ।
Y.Y.007/017
षडङ्गुलं तु हृन्मध्यात्कण्ठकूपं तथैव च ।
Y.Y.007/017
कण्ठकूपाच्च जिह्वाया मूलं स्याच्चतुरङ्गुलम् ।

## कण्ठचक्र

H.R.001/063
हृदयं कण्ठचक्रस्थं धौत्याख्येन तु कर्मणा ।
H.R.001/066
विशुद्धं कण्ठचक्रस्थं आज्ञाचक्रं भ्रुवोर्मुखे ।

## कण्ठदुःख

Y.M.051
ततो जालन्धरो बन्धः कण्ठदुःखौघनाशनः ।

## कण्ठदुःखौघ

G. P.001/079
ततो जालन्धरो बन्धो कण्ठदुःखौघनाशनः ।

## कण्ठदेश

S.SV.352
निरीक्षयेन्निजच्छायां कण्ठदेशे समाहितः ।
Y.R.192
हृदयं कण्ठदेशं च समायाति समीरणः ।
Y.V.010
विशुद्धिः कण्ठदेशे च आज्ञाचक्रं भ्रुवोर्मुखम् ।
Y.V.012
नासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वर...।

## कण्ठदोष

Y.B.104
उदरे वातदोषघ्नं कण्ठदोषं निहन्ति च ।

## कण्ठनाल

H.R.001/049
उदरगतपदार्थमुद्वमन्ती पवनमपानमुदीर्यकण्ठनाले ।
H.R.001/050
कुम्भाम्भः कण्ठनाले गुरुगजकरणी...हठज्ञैः ।
H.R.002/032
कण्ठेन पूरयेद्वायुं रेचयेत्कण्ठनालतः ।
S.K.S.087
पीत्वा तोयं कण्ठनालेन नौलीं ...नालवुत्थितौ...।
S.K.S.088
...रेचयेत्कण्ठनालात् शुद्धो देहश्चक्रनाडीगणश्च ।

## कण्ठबन्ध

A.P.030
कण्ठे बन्धं समारोप्याधाराद्वायुमूर्ध्वतः ।

## कण्ठमध्य

G. P.001/034
समानो नाभिदेशे तु उदानः कण्ठमध्यतः ।
Y.M.023
समानो नाभिदेशे तु उदानः कण्ठमध्यगः ।

## कण्ठमध्यग

S.SV.044
समानो नाभिदेशे तु उदानः कण्ठमध्यगः ।

## कण्ठमुद्रा

A.P.038
पुनरास्फालनं कट्यां सुस्थिरं कण्ठमुद्रया ।

## नपुंसक
**S.SV.294**
तेजसि गर्भपातः स्यान्नभस्यपि नपुंसकः ।
**S.SV.295**
चन्द्रे स्त्री पुरुषः सूर्ये मध्यमार्गे नपुंसकः ।

## नभ
**S.SV.153**
बिन्दुभिस्तु नभो ज्ञेयमाकारैस्तत्त्वलक्षणम् ।
**S.SV.154**
तिर्यग्वायुप्रवाहश्च नभो वहति सङ्क्रमे ।
**S.SV.156**
जानुदेशे क्षितिस्तोयं पादान्ते मस्तकेनभः ।
**S.SV.159**
मध्ये स्तम्भं विजानीयान्नभः सर्वत्रमध्यमम् ।
**S.SV.162**
नभसो निष्फलं सर्वं ज्ञातव्यं तत्त्ववादिभिः ।
**S.SV.163**
हानिःस्याद्वह्निवाताभ्यां नभसो निष्फलं भवेत् ।
**S.SV.175**
वायुश्चोत्तरदिग्ज्ञेयो मध्ये कोणगतं नभः ।
**S.SV.177**
वह्नौ मृत्युः क्षयोवायुर्नभः स्थानं दहेत्कचित् ।
**S.SV.179**
प्रयातिवायुतोऽन्यत्र हानिमृत्यू नभोऽनले ।
**S.SV.181**
तेजस्येव चतुष्पादौ नभसा पादवर्जितः ।
**S.SV.196**
नभः पञ्चगुणं प्रोक्तंब्रह्मज्ञानेन भाषितम् ।
**S.SV.197**
अग्नेस्त्रिंशत्पुनर्वायोर्विंशतिर्नभसो दश ।
**S.SV.199**
नभस्येकगुणश्चैव तत्त्वज्ञानमिदं भवेत् ।
**S.SV.264**
युद्धे हि तैजसो भङ्गो मृत्युर्वायौ नभस्यपि ।
**S.SV.294**
तेजसि गर्भपातः स्यान्नभस्यपि नपुंसकः ।
**S.SV.313**
विषमे वह्नितत्त्वं स्याज्ञायते केवलं नभः ।

**Y.M.059**
यावद्बद्धा नभो तावद्बिन्दुर्न गच्छति ।
**Y.R.173**
दृश्यते प्रथमाभ्यासे नभःकृष्णं तु केवलम् ।

## नभोजल
**G. P.001/079**
बध्नाति हि शिरोजालं नाधो याति नभोजलम् ।
**Y.M.051**
बध्नाति हि शिराजालं अधो नाभिं नभोजलम् ।

## नभोधारणा
**G. P.002/058**
...देषा मोक्षकपाटपाटनपटुः प्रोक्ता नभोधारणा ।
**Y.M.153**
तेषां मोक्षकवाटभेदनपटुः प्रोक्ता नभोधारणा ।

## नभोमुद्रा
**G. P.001/057**
महामुद्रां नभोमुद्रां उड्डीयानं जलन्धरम् ।
**G. P.001/069**
यावद्बद्धा नभोमुद्रा तावद्बिन्दुर्न गच्छति ।
**Y.M.046**
महामुद्रा नभोमुद्रा ओड्याणं च जलन्धरम् ।

## नभोबिल
**G. P.002/075**
घण्टिका लम्बिकास्थान भ्रूमध्ये च नभोबिलम् ।
**Y.M.169**
घण्टिका लम्बिका स्थानं भ्रूमध्यञ्च नभोबिलम् ।

## नमस्कार
**H.R.003/003**
तपो दांतिस्तितिक्षा च नमस्कार प्रदक्षिणम् ।

## नय
**A.P.021**
क्षमावीर्यनयैर्युक्तो वयस्थस्सत्त्ववानपि ।

## नयन
**H.R.001/057**
...नादस्फुटत्वं नयने च निर्मले ।
**S.K.S.102**
दुग्धाप्लावितितूलेन नयनाप्यायनं परम् ।





**S.SV.349**
यस्य न स्फुरति ज्योति पीड्यते नयनद्वयम् ।
**Y.M.132**
ऊर्ध्वास्ये भ्रुवसन्निवेश नयने सिक्ताङ्गगात्रं पिबेत् ।
**Y.R.172**
निमील्य नयने पश्येद्भ्रुवोर्मध्यं सदाधिया ।
**Y.R.247**
निमील्य नयने चित्तं कृत्वैकाग्रमनन्यधीः ।

## नर
**G. P.002/079**
संसारस्यैकरूपां त्रिभुवनजननीं धर्मदात्रीं नराणाम् ।
**H.R.001/071**
निन्दां च ये प्रकुर्वन्ति राक्षसास्ते नराः क्षितौ ।
**Y.R.310**
नरो वाप्यथवा नारी स याति परमां गतिम् ।

## नरक
**Y.M.097**
द्वाराणां नर(व) कंनिरुध्य पवनं जित्वा दृढं धारयेत् ।
**Y.Y.006/081**
प्राणायामादृते नान्यत्तारकेनरकादपि ।

## नरयुद्ध
**S.SV.275**
नरयुद्धं यमयुद्धं त्वया प्रोक्तंमहेश्वर ।

## नरसिंह
**S.SV.288**
रूपलावण्यसम्पन्नो नरसिंहः प्रसूयते ।

## नरोत्तम
**Y.Y.004/049**
तेषु मुख्यतमावेतौ प्राणापानौ नरोत्तमे ।

## नल
**S.K.S.077**
ग्रन्थिदोषं च धरणीसम्भवं नलसम्भवम् ।
**S.K.S.107**
धरणीनल्योर्दोषः शूल्दोषश्च नश्यति ।
**S.K.S.112**
एकीकृत्य नलौ सम्यगुत्थाप्य गुरुमार्गतः ।

## नलजा
**S.K.S.133**
वंशजा नलजा चापि नलिका चतुरङ्गुला ।

## नलप्रवेश
**S.K.S.026**
औष्ट्रं नलप्रवेशश्च फूत्कृतिस्तदनन्तरम् ।

## नवद्वार
**G. P.001/014**
एकस्तम्भं नवद्वारं गृहं पञ्चाधिदैवतम् ।
**Y.B.134**
पूरितस्तु नवद्वारैरीषत्कुम्भकतां गतः ।
**Y.V.023**
सिध्यन्ति वज्रगुम्फानि नवद्वाराणि बन्धयेत् ।
**Y.Y.010/014**
नवद्वाराणि संयम्य गार्ग्यस्मिन्ब्रह्मणः पुरे ।

## नवनीत
**H.R.001/072**
क्षीराज्यखण्डनवनीतसितामधूनि ।

## नवयौवन
**Y.R.217**
हित्वा देहं विशेदन्यं कायं वा नवयौवनम् ।

## नवाङ्गुल
**Y.Y.004/016**
कन्दस्थानं मनुष्याणां देहमध्यान्नवाङ्गुलम् ।

## नवीन
**Y.R.068**
घृतं नवीनं सेवेत निशायां च पयः पिबेत् ।

## नलिका
**S.K.S.133**
वंशजा नलजा चापि नलिका चतुरङ्गुला ।
**S.K.S.134**
मूलेन नलिकां दत्वा जलमाकर्षयेद्बलात् ।
**S.K.S.136**
अधश्चक्रीं पुरा कृत्वा नलिकां चानुपायुगाम् ।
**S.K.S.145**
त्र्यङ्गुलं नलिकां कृत्वा सूक्ष्मां श्लक्ष्णां समुद्रिकाम् ।

## नलिन
**S.K.S.146**
लिङ्गे प्रवेश्य नल्किां तोयपूर्णा तु भस्त्रिकाम् ।

## नलिन
**H.R.003/019**
विचित्रं नलिनं कान्तं शुद्धपक्षीसुमन्दकम् ।

## नलिनी
**Y.V.022**
प्रणवा गुदनाला च नलिनी सर्पिणी तथा ।

## नस्य
**H.R.002/109**
अमरीं यः पिबेन्नित्यं नस्यं कुर्वन्दिने दिने ।
**S.K.S.021**
स्वेदनं धूमनस्ये च तथा च कवलग्रहः ।
**S.K.S.124**
नश्यन्ति पूतिनासाद्या नस्यमेतत्समीरितम् ।

## नाग
**A.Y.001/051**
श्वासद्वयलयेनापि कूर्मनागादिवायवः ।
**G. P.001/033**
नागः कूर्मोऽथ कृकलो देवदत्तो धनञ्जयः ।
**G. P.001/035**
प्राणाद्याः पञ्च विख्याता नागाद्याः पञ्च वायवः ।
**G. P.001/036**
उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः ।
**H.R.002/082**
जतुवत्कनकं नागं नागं ताम्रातिनिर्मलं ।
**H.R.002/083**
निर्मितं त्रिपलैर्नागैर्द्वादशाङ्गुल दीर्घितं ।
**H.R.002/085**
नालं काञ्चननिर्मितं मृदुतरं साङ्गं च नागैः कृतम् ।
**H.R.002/138**
वासुक्याद्यैश्च नागैश्च तक्षकेनाथ वा पुनः ।
**S.SV.043**
नागः कूर्मोऽथ कृकलो देवदत्तो धनञ्जयः ।
**S.SV.045**
प्राणाद्याः पञ्च विख्याता नागाद्याः पञ्च वायवः ।
**S.SV.046**
उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः ।
**Y.M.022**
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जय ।
**Y.M.024**
प्राणाद्याः पञ्च विख्याताः नागाद्याः पञ्चवायवः ।
**Y.M.025**
नागो गृह्णाति पञ्चैताः कूर्म उन्मीलने स्थितः ।
**Y.R.166**
भस्मभूषितसर्वांगं नागालंकृतविग्रहम् ।
**Y.V.014**
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ।
**Y.Y.004/047**
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ।
**Y.Y.004/058**
नागादि वायवः पंच त्वगस्थ्यादिपु संस्थिताः ।

## नागकन्यका
**Y.R.083**
मुखेनाच्छाद्य तद्द्वारं सुप्ता सा नागकन्यका ।

## नागकर्मन्
**Y.Y.004/069**
उद्गारादि गुणो यस्तु नागकर्मेति कीर्त्यते ।

## नागपीठ
**H.R.003/019**
ब्रह्मासनं नागपीठं अन्तिमं च शवासनम् ।

## नागबन्ध
**S.K.S.092**
नासादन्त्यां तथा चास्यां नागबन्धो रहस्यकम् ।

## नागबोध
**H.R.001/083**
तालुकिर्नागबोधश्च खण्डः कापालिकस्तथा ।

## नागरूपा
**Y.Y.004/024**
स्फुरन्ती हृदयाकाशे नागरूपा महोज्वला ।

## नागी
**H.R.002/118**
फणी कुण्डलिनी नागी चक्री वक्री सरस्वती ।





## नागेन्द्र
**Y.Y.012/010**
प्रसुप्तनागेन्द्रवदुच्छ्वसन्ती सदा प्रबुद्धा प्रभया...।

## नाडिका
**S.SV.042**
नामानि नाडिकानां तु वातानां तु वदाम्यहम् ।
**Y.R.075**
तस्मादूर्ध्वमधस्तिर्यङ् निर्गताः सर्वनाडिकाः ।
**Y.R.076**
तासु सर्वासुवै तिस्रः प्रधाना नाडिका मताः ।
**Y.R.223**
जिह्वाधो नाडिका सूक्ष्मा जिह्वान्तर्गतिरोधिका ।

## नाडिगण
**Y.M.089**
शुद्धा नाडिगणा भवन्ति यमिनां मासत्रयादूर्ध्वतः ।

## नाडिजाल
**G. P.001/076**
शोधनं नाडिजालस्य चालनं चन्द्रसूर्ययोः ।
**Y.M.065**
शोधनं नाडिजालस्य चालनं चन्द्रसूर्ययोः ।

## नाडिशोधन
**H.R.003/096**
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ।
**Y.M.090**
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ।

## नाडी
**A.P.035**
अयं च सर्वनाडीनामूर्ध्वं गतिविशोधनः ।
**A.Y.001/020**
ध्यानं देहपदेषु नाडिषु षडाधारे च चेतोभ्रत् ...।
**A.Y.001/046**
निमेषेण श्वासपलैर्नाडीभिः प्रहरैर्दिनैः ।
**A.Y.001/054**
पलद्वयलयेनापि हृन्नाड्याश्चालनं भवेत् ।
**A.Y.002/032**
कृत्वा यत्नं निजतनुगताशेषनाडीप्रचारान् ।
**G. P.001/025**
तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः ।
**G. P.001/026**
तेषु नाडीसहस्रेषु द्विसप्तति रुदाहृताः ।
**G. P.001/031**
एवं द्वारं समाश्रित्य तिष्ठन्ति दश नाडयः ।
**G. P.001/037**
एते सर्वासु नाडीषु भ्रमन्ते जीवरूपिणः ।
**G. P.002/084**
धारणा पञ्चनाडीभिर्ध्यानं च षष्टिनाडीभिः ।
**H.R.001/057**
...नाडीषु सिद्धिर्हठसिद्धिलक्षणं ।
**H.R.002/009**
मध्ये पश्चिमतानेन स्यात्प्राणो ब्रह्मनाडिगः ।
**H.R.002/014**
मुखं सन्नम्य नाडीभ्यामाकर्ष्य पवनं शनैः ।
**H.R.002/016**
नाडी जलोदर धातुगत दोष विनाशनं ।
**H.R.002/047**
अयं च सर्व नाडीनामूर्ध्वगतिविबोधकः ।
**H.R.002/076**
कुण्डलीबोधनं सम्यक् नाडीनां परिशोधनम् ।
**H.R.003/082**
मलाकुलासु नाडीषु मारुतो नैव मध्यगः ।
**H.R.004/032**
द्विसप्ततिसहस्राणि नाड्यश्चरति मारुतः ।
**H.R.004/034**
नाडीनामपि सर्वासां मुख्यास्तत्र चतुर्दश ।
**H.R.004/036**
इडा नाडी च सर्वासां मुख्याश्चैताश्चतुर्दश ।
**H.R.004/039**
गङ्गा च पिङ्गला नाडी यमुने द्वे प्रकीर्तिते ।
**H.R.004/040**
सरस्वती सुषुम्नोक्ता नाड्योन्या निम्नगाः स्मृताः ।
**S.SV.031**
देहमध्ये स्थिता नाड्यो बहुरूपाः सुविस्तरात् ।
**S.SV.033**
नाडीस्था कुण्डलीशक्तिर्भुजङ्गाकारशायिनी ।
**S.SV.033**
ततो दशोर्ध्वगा नाड्योदशैवाधः प्रतिष्ठिताः ।

S.SV.035
तिर्यगूर्ध्वास्तथा नाड्यो वायुदेहसमन्विताः ।
S.SV.047
एते नाडीसु सर्वासु भ्रमन्ते जीवरूपिणः ।
S.SV.048
इडापिङ्गलसुषुम्नाभिर्नाडीभिस्तिसृभिबुधः ।
S.SV.049
इडानाडी स्थितावामाततोव्यस्ताच पिङ्गला ।
S.SV.052
शक्तिरूपः स्थितश्चन्द्रो वामनाडीप्रवाहकः ।
S.SV.052
दक्षनाडीप्रवाहश्च शम्भुरूपो दिवाकरः ।
S.SV.060
चन्द्रनाडीप्रवाहेण सौम्यकार्याणि कारयेत् ।
S.SV.061
सूर्यनाडीप्रवाहेण रौद्रकर्माणि कारयेत् ।
S.SV.072
क्रमादेकैकनाड्यां च तत्त्वानां पृथगुद्भवः ।
S.SV.090
यदङ्गे वहते नाडी ग्राह्यं तेन कराङ्घ्रिणा ।
S.SV.095
तत्सर्वं पूर्णनाडीषु जायते निर्विकल्पकम् ।
S.SV.099
अयोग्ये योग्यता नाड्या योग्यस्थानेप्ययोग्यता ।
S.SV.125
तस्यां नाड्यां स्थितो वह्निर्ज्वलते कालरूपकः ।
S.SV.183
वामनाड्यां स्थिताः सर्वे सर्वकार्येषुनिश्चिताः ।
S.SV.192
अस्थि मांसं त्वचा नाडी रोमं चैव तु पञ्चमम् ।
S.SV.205
वहन्नाडीस्थितो दूतो यत्पृच्छति शुभाशुभम् ।
S.SV.230
वहन्नाड्यागतः पादः सर्वसिद्धिप्रदायकः ।
S.SV.238
या नाडी बहते चाङ्गे तस्यामेवाधिदेवता ।
S.SV.242
यत्र नाड्यां बहेद्वायुस्तदङ्गे प्राणमेव च ।
S.SV.248
कुम्भकोयुद्धकालेच तिस्रोनाड्यस्त्रयीगतिः ।

S.SV.256
यस्या नाड्या भवेच्चारस्तां चिशं युधि संश्रयेत् ।
S.SV.257
यदि सङ्ग्रामकाले तु वामनाडी सदा वहेत् ।
S.SV.261
पूर्णनाडीगतः पृष्ठे शून्याङ्गं च तदाग्रतः ।
S.SV.293
चन्द्रनाडी यदा प्रश्ने गर्भे कन्या तदा भवते ।
S.SV.314
रवौ संक्रमते नाडी चन्द्रमन्ते प्रसर्पिता ।
S.SV.381
स्वीयाङ्गे वहते नाडी तन्नाडीरोधनं कुरु ।
S.SV.392
एकाक्षरप्रदातारं नाडीभेदविवेचकम् ।
Y.B.096
सन्तप्ता साग्निना नाडी शक्तिस्त्रैलोक्यमोहिनी ।
Y.B.105
नाडीभ्यां वायुमाकृष्य कुण्डल्याःपार्श्वयोः सुधीः ।
Y.B.124
मध्यमाभ्रमणेन स्यात् स प्राणो ब्रह्मनाडिगः ।
Y.M.016
तत्र नाड्यः समुत्पन्नाः सहस्राणि द्विसप्ततिः ।
Y.M.020
इडा पिङ्गला सुषुम्नेति तिस्रो नाड्य उदीरिताः ।
Y.M.175
धारणं पञ्च नाड्यस्तु ध्यानं षट् चैव नाडिकाः ।
Y.R.073
गतिं विज्ञाय नाडीनां कुण्डलीस्थानमेव च ।
Y.V.019
कण्ठसङ्कोचनं कृत्वा द्वे नाड्यौ स्तम्भयेद् दृढम् ।
Y.V.021
आकुञ्चयेद्रविश्चैव पश्चान्नाडी प्रवर्तते ।
Y.Y.004/002
केनोपायेन शुद्धाः स्युर्नाडयः सर्वदेहिनाम् ।
Y.Y.004/003
उत्पत्तिं चापि नाडीनां चारणं च यथाविधि ।
Y.Y.004/025
कन्दमध्ये स्थिता नाडी सुषुम्णेति प्रकीर्तिता ।
Y.Y.004/025
तिष्ठन्ति परितः सर्वाश्चक्रेऽस्मिन्नाडीसंज्ञकाः ।





Y.Y.004/026
नाडीनामपि सर्वासां मुख्यास्त्वेताश्चतुर्दश ।
Y.Y.004/030
पृष्ठमध्ये स्थिता नाडी सा हि मूर्ध्नि व्यवस्थिता ।
Y.Y.004/044
विश्वोदरा तु या नाडी तुन्दमध्ये व्यवस्थिता ।
Y.Y.004/046
नाडीष्वेतासु सर्वासु विज्ञातव्यास्तपोधने ।
Y.Y.004/048
एते नाडीषु सर्वासु चरन्ति दश वायवः ।
Y.Y.004/065
समानवायुना सार्धं रसं सर्वासु नाडीषु ।
Y.Y.005/001
केनोपायेन शुद्धाः स्युर्नाडयो मे त्वं वद प्रभो ।
Y.Y.006/011
नाड्या प्राणं समारोप्य पूरयित्वोदरस्थितम् ।
Y.Y.006/046
नाडीभ्यां वायुमारोप्य नाभौ वा तुन्दपार्श्वयोः ।
Y.Y.007/032
नाडीभ्यां वायुमापूर्य कुण्डल्याः पार्श्वयोः क्षिपेत् ।
Y.Y.012/011
वायुना...वह्निशिखाभिः कन्दमध्यगतनाडिषु...।

## नाडीगण

G. P.001/100
शुद्धा नाडिगणा भवन्ति यमिनां मासत्रयादूर्ध्वतः ।
H.R.003/087
शुद्धा नाडीगणा भवंति यमिनां मासत्रयादूर्ध्वतः ।
S.K.S.088
...रेचयेत्कण्ठनालत् शुद्धो देहश्चक्रनाडीगणश्च ।

## नाडीचक्र

G. P.001/095
शुद्धिमेति यदा सर्वनाडीचक्रं मलाकुलम् ।
H.R.002/002
विधिवत्प्राणसंयामैः नाडीचक्रे विशोधिते ।
H.R.004/033
नाडी चक्रमिति प्रोक्तं तस्मान्नाड्यः समागताः ।

## नाडीजाल

Y.M.083
शुद्धीयेत यदा सर्वं नाडिजालं महाजलम् ।

## नाडीत्रय

S.SV.391
नाडीत्रयं विजानाति तत्त्वज्ञानं तथैव च ।

## नाडीद्वय

S.SV.126
दयाऽनुक्रममुल्लङ्घ्य यस्य नाडीद्वयं वहेत् ।

## नाडीद्वार

H.R.003/039
पद्मासनस्थितो योगी नाडीद्वारेषु पूरयेत् ।

## नाडीप्रचालन

S.SV.101
तदाकार्यानुरोधेन कार्यं नाडीप्रचालनम् ।

## नाडीभेद

S.SV.018
नाडीभेदं तथा प्राणतत्त्वभेदं तथैव च ।
S.SV.144
भूलोकात्सत्यपर्यन्तं नाडीभेदः पृथक्पृथक् ।

## नाडीमध्य

S.SV.255
जयमध्ये तु सन्देहे नाडीमध्यं तु लक्षयेत् ।

## नाडीमय

G. P.001/028
एतन्नाडीमयं चक्रं ज्ञातव्यं योगिभिः सदा ।
Y.M.019
एवं नाडीमयं चक्रं ज्ञातव्यं योगिभिः सदा ।

## नाडीमार्ग

Y.Y.004/056
द्विसप्ततिसहस्रेषु नाडीमार्गेषु संचरेत् ।

## नाडीविशुद्धि

S.K.S.010
शीघ्रं नाडीविशुद्धिः स्याद् व्यापदामप्यनुद्भवः ।

## नाडीशुद्धि

H.R.003/095
यदा तु नाडीशुद्धिः स्यात्तदा चिह्नानि बाह्यतः ।

**S.K.S.031**
नाडीशुद्ध्याख्यकुम्भस्तु कुम्भकेष्वेव वक्ष्यते ।
**Y.Y.003/018**
नाडीशुद्धिं च कृत्वा तु प्राणायामं ततः कुरु ।
**Y.Y.004/002**
भगवन्ब्रूहि मे स्वामिन्नाडीशुद्धिं विधानतः ।
**Y.Y.005/002**
तां समालोक्य कृपया नाडीशुद्धिमभाषत ।
**Y.Y.005/021**
नाडीशुद्धिमवाप्नोति पृथक्चिह्नोपलक्षिताम् ।

## नाडीशोधन

**G. P.001/101**
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधने ।
**Y.Y.004/072**
विधिनोक्तेन मार्गेण नाडीसंशोधनं कुरु ।

## नाडीसंस्थान

**Y.Y.004/071**
ज्ञात्वैवं नाडीसंस्थानं वायूनां स्थानकर्मणी ।
**Y.Y.009/004**
मर्मस्थानानि नाडीनां संस्थानं च पृथक्पृथक् ।

## नाडीसङ्क्रमण

**S.SV.132**
नाडीसङ्क्रमणे काले तत्त्वसङ्क्रमनेऽपि च ।

## नाडीसमाश्रय

**Y.R.074**
कुक्कुटांडसमाकरः सर्वनाडीसमाश्रयः ।

## नाडीसहस्त्र

**Y.M.017**
तेषु नाडीसहस्त्रेषु द्विसप्ततिरुदाहृताः ।
**Y.M.026**
एवं नाडीसहस्त्रेषु वर्तन्ते जीवरूपिणः ।

## नाथ

**S.K.S.003**
गोरक्षादिमहासिद्धैर्नाथैर्मुनिवरैरपि ।
**S.K.S.148**
विदुषा रघुवीरेण श्रीमन्नाथप्रसादतः ।

## नाथमार्ग

**S.K.S.090**
...प्राक्तनान्नाथमार्गान् शुद्धिर्दिव्या राघवेण प्रणीता ।
**Y.B.007**
बद्धा येन विमुच्यन्ते, नाथमार्गमतः परम् ।
**Y.B.189**
दातव्यं शिवभक्तेषु, नाथमार्गपरेषु च ।

## नाथसङ्केत

**Y.B.136**
स एव नाथसङ्केतः, सिद्धसङ्केतलक्षणः ।

## नाद

**A.P.013**
बिन्दुनादौ महौषध्यौ विद्येते सर्वजन्तुषु ।
**A.P.054**
न नादो न च बिन्दुश्च न चेतो नाप्यचेतनः ।
**G. P.001/101**
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधने ।
**G. P.002/058**
तन्नादेन सदाशिवेन सहितं तत्त्वं हकारान्वितम् ।
**H.R.001/087**
तन्त्रे कोमलनाद भङ्गलहरी माधुर्य सल्लापिनीं ।
**H.R.002/027**
वेगोद्घोषं रेचकं भृङ्गनादं पूरकं मन्दमन्दम् ।
**H.R.002/060**
प्राणापानौ नादबिन्दू मूलबन्धेन चैकताम् ।
**H.R.002/101**
तस्याः शरीरे नादस्तु बिन्दुतामेव गच्छति ।
**H.R.002/136**
प्राणे सुषुम्नां संप्राप्ते नादस्तु श्रूयतेष्टधा ।
**H.R.003/028**
न खेचर्या समा मुद्रा न नादसदृशो लयः ।
**H.R.004/004**
मारुतस्य लयो नादः तन्नादं लयमाश्रयेत् ।
**H.R.004/006**
उन्मनी कारणं सद्यो नादमेवानु धारयेत् ।
**H.R.004/011**
इति नानाविधा नादाः श्रूयन्ते देहमध्यतः ।
**H.R.004/013**
नादमेवानुसंदध्यान्नादे चित्तं विलीयते ।





**H.R.004/014**
नाद एवानुसन्धेयो योगसाम्राज्यमिच्छता ।
**H.R.004/015**
नादे प्रवर्तितं चित्तं नादेन सह शाम्यति ।
**H.R.004/018**
ब्रह्मरन्ध्रे भवेद्भेदौ यो नादः सूर्यसम्भवः ।
**H.R.004/054**
बिन्दुनादौ शक्तिशिवौ शाम्भवीति ततः परम् ।
**Y.B.117**
प्राणापानं नादबिन्दु मूलबन्धेन चैकताम् ।
**Y.B.141**
नानानादाः प्रवर्तन्ते, संस्रवेच्चन्द्रमण्डलम् ।
**Y.B.166**
नाना नादाः प्रवर्तन्ते मार्दवं स्यात्कलेवरे ।
**Y.M.108**
घण्टादिनादं गम्भीरं सिद्धिस्तस्य न दूरतः ।
**Y.R.203**
कर्णनादैः शिरस्तालैरुष्णवारिनिषेचनैः ।
**Y.R.247**
श्रृणुयाद्दक्षिणे कर्णे नादमन्तर्गत शुभम् ।
**Y.R.249**
श्रवणे तेन नादस्य नैव बाहुश्रमो भवेत् ।
**Y.R.250**
श्रूयते प्रथमाभ्यासे ध्वनिर्नादस्य मिश्रितः ।
**Y.R.251**
वीणारवसमः पश्चात् तालनादोपमस्ततः ।
**Y.R.251**
घण्टानादसमःपूर्वं ततः शङ्खसमो ध्वनिः ।
**Y.Y.006/035**
नादं चोत्पादयत्येषः कुम्भकः प्राणसंयमः ।
**Y.Y.006/055**
आमूर्ध्नो वर्तत नादो वीणादण्डवदुत्थितः ।
**Y.Y.006/056**
व्योमरन्ध्रे गते नादे गिरिप्रस्त्रवणं यथा ।
**Y.Y.008/029**
प्रणवस्य तु नादान्ते परमानन्दविग्रहम् ।
**Y.Y.008/031**
विशुद्धचेतसा पश्य नादान्ते परमेश्वरम् ।

## नादचिन्तन

**Y.R.282**
यदुक्तं खेचरीयोगे यच्चोक्तं नादचिन्तने ।

## नादध्वनि

**Y.R.113**
प्राणे मूर्धनि संप्राप्ते नादध्वनिरनुत्तमः ।

## नादयोग

**Y.R.258**
अथवा नादयोगेन शरीरे कृशतां गते ।

## नादश्रवण

**Y.R.221**
खेचरीमुद्रया वापि नादश्रवणतस्तथा ।
**Y.R.256**
नादश्रवणतोयोऽसावानन्दो योगिनो भवेत् ।
**Y.R.260**
नादश्रवणतोनित्यमन्तर्लीनं भवेन्मनः ।

## नादस्फुटत्व

**H.R.001/057**
...नादस्फुटत्वं नयने च निर्मले ।

## नादस्फोट

**S.K.S.089**
...नादस्फौट्यं मलशुद्धिश्च कोष्ठात् ।

## नादानुसन्धान

**H.R.001/012**
नादानुसन्धानमेकमेव मन्यामहे मान्यतमं लयानाम् ।
**H.R.004/005**
नादानुसन्धानसमाधिभाजां योगीश्वराणां हृदये... ।
**Y.R.245**
अथ नादानुसन्धानं प्रवक्ष्यामि यथाक्रमम् ।

## नादाभिव्यक्ति

**H.R.003/096**
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ।
**Y.M.090**
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ।
**Y.Y.005/022**
नादाभिव्यक्तिरित्येते चिह्नं तत्सिद्धिसूचकम् ।

Y.Y.012/006
नादाभिव्यक्तिरित्येते चिह्नान्यादौ भवन्ति हि ।

## नादाभ्यास
Y.R.248
त्यक्त्वात्यक्त्वाङ्गुलिं मध्येनादाभ्यासंसमाचरेत् ।

## नादारम्भ
Y.R.254
नादारम्भे भवेत्सर्वगात्राणां भञ्जनं ततः ।

## नादासक्त
H.R.004/012
नादासक्तं तथा चित्तं विषयान्न हि काङ्क्षते ।

## नादोत्पत्ति
Y.Y.006/055
नादोत्पत्तिस्त्वनेनैव शुद्धस्फटिकसन्निभा ।

## नानामार्ग
Y.B.008
नानामार्गैस्तु दुष्प्राप्यं, कैवल्यं परमं पदम् ।

## नानावर्ण
S.SV.357
नानावर्णोऽथ चेत्तस्मिन्सिद्धश्चगीयते महान् ।

## नाभस्
S.SV.173
मोक्षदं नाभसं तत्त्वं सर्वकार्येषु निष्फलम् ।

## नाभि
G. P.001/015
नाभौ दशदलं पद्मं सूर्यसङ्ख्यादलं हृदि ।
G. P.001/025
ऊर्ध्वं मेढ्रादधोनाभेः कन्दो योनिः खगाण्डवत् ।
G. P.001/078
उदरात्पश्चिमे भागे अधो नाभेर्निगद्यते ।
G. P.001/099
ध्यात्वा नाभिस्थितं योगी प्राणायामी सुखी भवेत् ।
G. P.002/034
ऊर्ध्वं नाभिरधस्तालुरूर्ध्वं भानुरधः शशी ।
G. P.002/075
गुदं मेढ्रं च नाभिश्च हृत्पद्मं च तदूर्ध्वतः ।
G. P.002/078
नाभौ संयम्य पवनगतिमधो रोधयं संप्रयत्नादा...।
G. P.002/079
नाभौ शुभ्रारविन्दं तदुपरि विमलं मण्डलं चण्डरश्मेः ...।
H.R.001/048
नाभिदघ्नजले पायुर्न्यस्तनालोत्कटासनः ।
H.R.001/062
मणिपूरं नाभिगतं नौल्याख्येन तु कर्मणा ।
H.R.002/055
उदरे पश्चिमं ताणं नाभेरूर्ध्वं च धारयेत् ।
H.R.002/068
ऊर्ध्वं नाभिरधस्तालुरूर्ध्वं भानुरधः शशी ।
H.R.003/049
नाभौ संस्थाप्य गुल्फौ च तन्मध्ये करपात्रताम् ।
S.K.S.050
नाभ्यां ष्ठीवेत्कफं यत्र तद्धि प्राणबलेन तु ।
S.K.S.106
नाभौ पात्रं तु संस्थाप्य चोर्ध्वतो धारया जलम् ।
Y.B.120
नाभेरूर्ध्वमधश्चापि, प्राणं कुर्यात्प्रयत्नतः ।
Y.M.016
ऊर्ध्वं मेढ्रादधो नाभेः कन्दो...खगाण्डवत् ।
Y.M.050
उदरात्पश्चिमे भागे अधो नाभेस्तता युते ।
Y.M.051
बध्नाति हि शिराजालं अधो नाभिं नभोजलम् ।
Y.M.086
कुम्भयित्वा नाभिस्थितं योगी प्राणायामे सुखी...।
Y.M.123
ऊर्ध्वं नाभिरधस्तालु रूर्ध्वं भानुरधश्शशी ।
Y.M.169
गुदं मेढ्रश्च नाभिश्च हृदयं चक्रमूर्ध्वतः ।
Y.R.065
नाभौ सञ्चिन्तयेद्योगी सूर्यमण्डलमुज्ज्वलम् ।
Y.R.074
अस्ति नाभेरधः कन्दो देहमध्यगतः सदा ।
Y.R.087
नाभेः पश्चिमतानं हि बलात्कुर्यात्पुनः पुनः ।
Y.R.105
नाभेः पश्चिमतानं तु तथा कुर्यात्प्रयत्नतः ।





Y.R.140
भ्रुवोर्मध्ये चनासाग्रे नाभौ वा हृदयाम्बुजे ।
Y.R.192
ततः कतिपयैरेवं दिनैर्नाभिं विलंघ्य वै ।
Y.V.009
मणिपूरं नाभिगतं हृदये चाप्यनाहतम् ।
Y.V.012
आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे ।
Y.Y.004/018
तन्मध्यं नाभिरित्युक्तं नाभौ चक्रसमुद्भवः ।
Y.Y.004/021
तस्योर्ध्वं कुण्डलीस्थानं नाभेस्तिर्यगथोर्ध्वतः ।
Y.Y.004/052
उदरे वृषणे कट्यां जङ्घेनाभौ वदन्ति हि ।
Y.Y.006/046
नाडीभ्यां वायुमारोप्य नाभौ वा तुन्दपार्श्वयोः ।
Y.Y.006/068
यावन्मनो लयत्यस्मिन्नाभौ सवितृमण्डले ।
Y.Y.007/010
नाभिश्च हृदयं गार्गि कण्ठकूपस्तथैव च ।
Y.Y.007/016
मेढ्रान्नाभिश्च विज्ञेया गार्गि सार्धदशाङ्गुलम् ।
Y.Y.007/016
चतुर्दशाङ्गुलं नाभेर्हृन्मध्यं च वरानने ।
Y.Y.008/009
आजानोर्नाभिपर्यन्तमपांस्थानमिति द्विजाः ।
Y.Y.012/008
ध्यायन्सदा चक्रिणमप्रबुद्धं नाभौ सदा कुण्डलिनी...।
Y.Y.012/010
नाभौ...कुण्डली सा तिर्यक्सु देहेषु तथेतरेषु ।
Y.Y.012/014
ततो नयेदपानं तु नाभेरूर्ध्वमिदं स्मरन् ।
Y.Y.012/015
वायुर्यथा वायुसखेन सार्धं नाभि...गतः शरीरे ।

## नाभिचक्र
Y.R.145
नाभिचक्रे यदा कुर्याद्धारणां योगविद्यदि ।
Y.R.191
नाभिचक्रसमीपे तु संभूय परितः शनैः।

Y.V.015
पावकश्शक्तिमध्यस्थो नाभिचक्रे रविः स्थितः ।

## नाभिदघ्न
H.R.001/043
नाभिदघ्ने जले स्थित्वा पायुनाले स्थिताङ्गुलिः ।

## नाभिदेश
G. P.001/034
समानो नाभिदेशे तु उदानः कण्ठमध्यतः ।
G. P.002/032
नाभिदेशे वसत्येको भास्करो दहनात्मनः ।
S.SV.044
समानो नाभिदेशे तु उदानः कण्ठमध्यगः ।
Y.M.023
समानो नाभिदेशे तु उदानः कण्ठमध्यगः ।

## नाभिपार्श्व
H.R.003/041
धरामवष्टभ्य करद्वयेन तत्कूर्परस्थापितनाभिपार्श्वः ।
Y.Y.003/015
हस्तयोः कूर्परौ चापि स्थापयन्नाभिपार्श्वयोः ।

## नाभिमण्डल
G. P.001/023
तन्नाभिमण्डलं चक्रं प्रोच्यते मणिपूरकम् ।
H.R.004/041
वैद्युताग्निः सुषुम्ना पार्थिवो नाभिमण्डले ।
Y.M.014
तं नाभिमण्डलं चक्रं प्रोच्यते मणिपूरकम् ।
Y.R.105
यथा स्यान्मेरुदण्डेन संलग्नं नाभिमण्डलम् ।

## नाभिमध्य
Y.M.121
नाभिमध्ये वसत्येषां भास्करो दहनात्मकः ।
Y.Y.004/050
आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यमे ।
Y.Y.006/037
नाभिमध्ये च नासाग्रे पादाङ्गुष्ठे च यत्नतः ।
Y.Y.006/039
सर्वरोगविनाशः स्यान्नाभिमध्ये च धारणात् ।

Y.Y.006/067
मन्त्रमुच्चारयन्दीर्घं नाभिमध्ये निरोधयेत् ।
Y.Y.006/069
एतेन नाभिमध्यस्थधारणेनैव मारुतः ।
Y.Y.007/027
कण्ठमूलात्तु हृन्मध्ये हृदयान्नाभिमध्यमे ।
Y.Y.007/027
नाभिमध्यात्पुनर्मेढ्रे मेढ्राद्वह्न्यालये ततः ।
Y.Y.008/010
नाभिमध्याद्गलान्तं यद्वह्निस्थानं तदुच्यते ।
Y.Y.012/013
बोधं...चक्रिणि नाभिमध्ये प्राणाः...कलेवरेऽस्मिन् ।

## नाभिमूल

S.SV.156
स्कन्धद्वये स्थितो वह्निर्नाभिमूले प्रभञ्जनः ।
Y.R.079
क्रमाच्चक्रेषु गच्छंती नाभिमूलमुपाश्रिता ।
Y.Y.006/071
प्रबुद्धे संसरत्यस्मिन्नाभिमूले तु चक्रिणि ।

## नाभिस्थान

G. P.001/072
सिन्दूरद्रवसंकाशं नाभिस्थाने स्थितं रजः ।
S.SV.032
नाभिस्थानगकन्दोर्ध्वमङ्कुराइव निर्गताः ।

## नाभिस्थित

Y.M.087
ध्यात्वा नाभिस्थितं योगी प्राणायामे सुखी भवेत् ।

## नाभितल

H.R.003/013
पादपिण्डनहंसाख्ये नाभीतलमतःपरम् ।

## नाभीलसितपादक

H.R.003/013
आकाशमुत्पादतलं नाभीलसितपादकम् ।

## नाम

S.SV.026
नामरूपादिकाः सर्वे मिथ्या सर्वेषु विभ्रमः ।

## नारद

Y.Y.011/013
अगस्त्यो नारदश्चैव वाल्मीकिर्बादरायणिः ।

## नारायण

Y.R.161
नारायणं चतुर्बाहुं शंखचक्रगदाधरम् ।
Y.Y.001/012
नारायणं जगन्नाथं सर्वभूतहृदि स्थितम् ।
Y.Y.008/017
स्मरन्नारायणं सौम्यं चतुर्बाहुं किरीटिनम् ।
Y.Y.009/013
वासुदेवं जगन्नाथं नारायणमजं हरिम् ।

## नारिकेल

H.R.001/050
पीत्वाकण्ठंसति गुडजलं नारिकेलोदकंवा ...।
S.K.S.108
शुद्धं तोयं नारिकेल...कण्ठं दुग्धमिश्रं ज.लं वा ।

## नारी

H.R.002/086
नारीं रम्यामधःस्थाप्य रहस्ये तु दिगम्बराम् ।
H.R.002/087
शयित्वा कुम्भकं कुर्यात् किंचिन्नारी स्वयं च हि ।
H.R.002/089
नार्या भगात् पतद्विन्दुमभ्यासेनोर्ध्वमाहरेत् ।
H.R.002/092
एवं यो भजते नारीं तामेव मनसा रमेत् ।
H.R.002/099
अभ्यासस्य क्रमं वक्ष्ये नारीणां च शनैः शनैः ।
S.SV.286
ऋतुकालभवा नारी पञ्चमेऽह्नि यदा भवेत् ।
Y.R.310
नरो वाप्यथवा नारी स याति परमां गतिम् ।
Y.Y.001/006
तमेवं गुणसम्पन्नं नारीणामुत्तमा वधूः ।

## नाल

H.R.001/048
नाभिदघ्नजले पायुर्न्यस्तनालोत्कटासनः ।





H.R.001/048
पायुन्यस्तनाले जल...बस्ति कर्म प्रकारापेक्षया ।
H.R.001/048
पायुनालन्यस्ताङ्गुल्याकुंच्य जलबस्ति मार्गः ।
H.R.002/078
तयोर्मध्यपूत्कारोचितं नालस्वरूपं प्रदर्श्यते ।
H.R.002/079
पूत्कारोचितकोलरूपसदृशं नालं हठाभ्यासिभिः ।
H.R.002/081
वायु सञ्चारणे त्याज्ये शरं नालोदितं मतम् ।
H.R.002/083
छत्राकारं प्रकुर्वीत नालं स्निग्धं सितं मृदु ।
H.R.002/085
नालं काञ्चननिर्मितं मृदुतरं साङ्गं च नागैः कृतम् ।
H.R.002/085
नालं तादृशमेव लिङ्गविवरे यत्नेन संस्थापये...।
S.K.S.087
पीत्वा तोयं कण्ठनालेन नौलीं ...नालवुत्थितौ...।
S.K.S.093
यद्वा एरण्डपत्रस्य नालं कण्ठे प्रवेशयेत् ।
Y.Y.009/012
द्वादशाङ्गुलनालेऽस्मिंश्चतुरङ्गुलमुन्मुखे ।

## नालद्रव्य

H.R.002/082
नालद्रव्यमिदं प्रोक्तं श्रीनिवासेन योगिना ।

## नालनौली

S.K.S.113
ऊर्ध्वमाकर्षयेत्तेन नालनौली शिवोदिता ।

## नालस्वरूप

H.R.002/081
लिङ्गरन्ध्रमध्मध्यस्थापनीय नालस्वरूपं लिङ्गरन्ध्र...।

## नाली

H.R.002/078
नालीं कुर्यात्प्रयत्नेन पूत्कारकरणोचिताम् ।

## नालीद्वय

H.R.002/078
...लिङ्गरन्ध्रमध्य...नालीद्वय निरूपणमादी क्रियते ।

## नाश

A.Y.002/029
तत्रेकनाशादपरस्य नाशः एकप्रवृत्तेरपरप्रवृत्तिः ।
A.Y.002/030
तत्राप्य साध्यः पवनस्य नाशः षडङ्गयोगा...।
H.R.001/059
नाशनं सर्वरोगाणां मोक्षमार्गस्य साधनम् ।

## नास

S.SV.382
मुखनासाक्षिकर्णान्तानङ्गुलीभिर्निरोधयेत् ।

## नासा

A.P.006
भ्रूनासादिषु कीटवन्न हि मनो मग्नं कथश्चिद्भवेत् ।
S.K.S.101
गोघृतं केसरोन्मिश्रं नासाप्यायनमुच्यते ।
S.K.S.124
नश्यन्ति पूतिनासाद्या नस्यभेतत्समीरितम् ।
Y.M.118
अगन्धमथवा गन्धं यं यं जिघ्रेति नासया ।
Y.Y.007/035
नासाभ्यां वायुमारोप्य पूरयित्वोदरस्थितम् ।

## नासाग्र

G. P.001/012
अङ्गुष्ठौ हृदये निधाय चिबुकंनासाग्रमालोकये...।
H.R.003/031
व्यात्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः ।
H.R.003/033
अङ्गुष्ठं हृदये निधाय चिबुकंनासाग्रमालोकयेत् ।
H.R.003/036
नासाग्रे विन्यसेद्राजदन्तमूलं तु जिह्वाया ।
S.SV.367
अरुन्धतीं भवेज्जिह्वा ध्रुवो नासाग्रमेव च ।
Y.M.009
अङ्गुष्ठे (ष्ठौ) हृदये...चिबुकंनासाग्रमालोकयेत् ।
Y.R.038
स्वाङ्के निधाय नासाग्रं पश्येन्निश्चलमानसः ।
Y.R.140
भ्रुवोर्मध्ये च नासाग्रे नाभौ वा हृदयाम्बुजे ।

Y.R.144
नासाग्रे हृदयाम्भोजे भ्रूमध्ये च विशेषतः ।
Y.V.015
बन्धमुद्रा कृतास्सर्वे नासाग्रे तु सुलोचनम् ।
Y.Y.003/010
व्यात्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः ।
Y.Y.005/015
नासाग्रे शशभृद्बिम्बं ज्योत्स्नाजालवितानितम् ।
Y.Y.006/037
नाभिमध्ये च नासाग्रे पादाङ्गुष्ठे च यत्नतः ।
Y.Y.006/039
नासाग्रे धारणं गार्गि वायोर्विजयकारणम् ।
Y.Y.009/033
शिव एव स्वयं भूत्वा नासाग्रारोपितेक्षणः ।

## नासाग्रदृक्

Y.Y.005/015
नासाग्रदृक् सदा सम्यक् सव्ये न्यस्येतरं करम् ।

## नासाग्रदृष्टि

G. P.001/083
नासाग्रदृष्टिरेकान्ते जपेदोङ्कारमव्ययम् ।
G. P.002/065
नासाग्रदृष्टिरात्मानं ध्यात्वा योगी सुखी भवेत् ।
G. P.002/066
नासाग्रदृष्टिरात्मानं ध्यात्वा संक्षोभयेज्जगत् ।
G. P.002/067
नासाग्रे दृष्टिमाधाय ध्यात्वा ब्रह्ममयो भवेत् ।
G. P.002/068
नासाग्रदृष्टिरात्मानं ध्यात्वा ब्रह्ममयो भवेत् ।
G. P.002/069
नासाग्रदृष्टिरात्मानं ध्यात्वानंदमयो भवेत् ।
G. P.002/070
नासाग्रदृष्टिरात्मानं ध्यात्वानन्दमयो भवेत् ।
G. P.002/072
नासाग्रदृष्टिरेकाकी ध्यात्वा ब्रह्ममयो भवेत् ।
Y.M.072
नासाग्रे दृष्टिरेकाकी जीवे (जपेत्) दोङ्कारमव्ययम् ।
Y.M.096
नासाग्रे दृष्टिमादाय प्राणायामं समभ्यसेत् ।
Y.M.160
नासाग्रे दृष्टिमादाय ध्यात्वा मुञ्चति किल्बिषम् ।
Y.M.161
नासाग्रे दृष्टिमादाय ध्यात्वा संशोभते जगत् ।
Y.M.162
नासाग्रे दृष्टिमादाय ध्यात्वा ब्रह्ममयो भवेत् ।
Y.M.163
नासाग्रे दृष्टिमादाय ध्यात्वा दुःखात्प्रमुच्यते ।
Y.M.164
नासाग्रे दृष्टिमादाय ध्यात्वा मृत्युं प्रमुञ्चति ।
Y.M.165
नासाग्रे दृष्टिमादाय ध्यात्वानन्दमयं भवेत् ।

## नासादन्ती

S.K.S.092
नासादन्त्यां तथा चास्यां नागबन्धो रहस्यकम् ।

## नासाद्वार

S.K.S.043
प्रवेशयेत्कण्ठमध्ये नासाद्वारेण तां कशात् ।

## नासानाल

H.R.001/038
नासानाले प्रवेश्यैनं मुखान्निर्गमयेत्क्रमात् ।
S.K.S.067
मृदु श्लक्ष्णं सितं सूत्रं नासानाले प्रवेशयेत् ।

## नासान्त

G. P.002/042
अमृतं कन्दरे कृत्वा नासान्तसुषिरे क्रमात् ।
G. P.002/043
नासान्ते सुषिरे नयेच्च गगनद्वारान्ततः सर्वतः ।
Y.M.131
नासान्त सुचिरेण याति गमनद्वारं ततः सर्वतः ।
Y.V.012
नासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वर...।
Y.Y.004/040
पिङ्गला चोर्ध्वगा याम्ये नासान्तं विद्धि मे प्रिये ।

## नासापुट

G. P.002/016
सम्बद्धासनमेढ्रमङ्घ्रियुगलं कर्णाक्षिनासापुटा...।





S.SV.150
श्रुत्योरङ्गुष्ठकौ मध्याङ्गुल्यौ नासापुटद्वये ।
Y.M.106
संबध्यासनमूलमङ्घ्रिघटितं कर्णाक्षिनासापुट...।
Y.Y.006/053
नासापुटौ मध्यमाभ्यां प्रच्छाद्य करणानि वै ।

## नासामूल

Y.Y.007/010
तालुमूलं च नासाया मूलं चाक्ष्णोश्च मण्डले ।
Y.Y.007/018
नासामूलं तु जिह्वाया मूलञ्च चतुरङ्गुलम् ।
Y.Y.007/025
नेत्रात्प्राणं समाकृष्य नासामूले निरोधयेत् ।
Y.Y.007/026
नासामूलात्तु जिह्वाया मूले प्राणं निरोधयेत् ।

## नासिका

H.R.002/024
धारयेन्नासिकां मध्यातर्जनीभ्यां विना दृढं ।
S.K.S.055
पीत्वा नासिकया जलेन जठरं सूर्येण...।
S.K.S.124
गोमूत्रैः साधयेत्तैलं नासिकायां प्रवेशयेत् ।
S.SV.368
नव भ्रुवं सप्त घोषं पञ्च तारां त्रिनासिकाम् ।
Y.Y.004/050
आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यमे ।

## नास्तिक

S.SV.012
आश्चर्यं नास्तिके लोकं आधारं त्वास्तिकेजने ।
S.SV.014
दुष्टे च दुर्जने क्रुद्धे नास्तिके गुरुतल्पगे ।

## निःश्रेयस्

Y.Y.001/070
तस्मात्सर्वेषु कालेषु सर्वैर्निःश्रेयसार्थिभिः ।

## निःश्वास

A.Y.002/022
प्राणाद्योच्छ्वासनिःश्वासविध्वस्तविषयग्रहः ।
A.Y.002/060
निःश्वासोच्छ्वासहीनस्तु निश्चितं मुक्त एव सः ।
H.R.002/022
रेचकोऽजस्र निःश्वासः पूरकस्तन्निरोधकः ।
Y.Y.004/067
निःश्वासोच्छ्वसकासाश्च प्राणकर्मेति कीर्त्यते ।
Y.Y.006/028
निःश्वासोच्छ्वसकौ तस्य न विद्येते कथंचन ।

## निःसङ्ग

Y.R.131
निःसंगो निर्जनस्थाने योगमेव सदाऽभ्यसेत् ।

## निःसरण

S.SV.247
जीवे विशतिसिद्ध्यन्तिहानिर्निःसरणे भवेत् ।

## निःस्पृह

Y.Y.001/054
कर्मणा मनसा वाचा परद्रव्येषु निःस्पृहा ।

## निःस्वन

G. P.002/088
न गन्धं न रसं रूपं न च स्पर्शं न निःस्वनम् ।
Y.M.179
न गन्धो न रसं रूपं न स्पर्शो न च निस्वनः ।

## निगम

A.Y.001/019
नग्नत्वं निगमागमादिकवितागोष्ठीसभाभ्यन्तरे ।

## निजच्छाया

S.SV.352
निरीक्षयेन्निजच्छायां कण्ठदेशे समाहितः ।

## निजबिन्दु

H.R.002/090
चलितं च निजं बिन्दुमूर्ध्वमाकृष्य रक्षयेत् ।

## निजरूप

Y.B.022
ज्ञातं येन निजं रूपं, कैवल्यं परमं शिवम् ।

## निजविग्रह

**A.P.027**
स्रवन्तं चामृतरसं यो ध्यायेन्निजविग्रहे ।

## नित्य

**A.P.007**
नित्यं मन्त्रयतो लभेन्न नृपतां नैवाधिपत्यं तथा ।
**A.Y.002/092**
नित्यं हि नूनं विगतप्रपञ्चं...।
**G. P.002/032**
अमृतात्मा स्थितो नित्यं तालुमूले च चन्द्रमाः ।
**G. P.002/051**
नित्यं सोमकलापूर्णशरीरं यस्य योगिनः ।
**G. P.002/071**
ध्यायन्नीलनिभं नित्यं भ्रूमध्ये परमेश्वरम् ।
**G. P.002/093**
निर्मलं निश्चलं नित्यं निष्क्रियं निर्गुणं महत् ।
**S.SV.269**
जीवेन क्रीडते नित्यं द्यूते जयति सर्वथा ।
**Y.B.012**
परमात्मपदं नित्यं, तत्कथं जीवतां गतम् ?
**Y.B.177**
सिद्धा नित्या महावीर्या, इच्छारूपाश्च योगजाः ।
**Y.M.140**
नित्यं सोमकलापूर्णं देही देहं न मुञ्चति ।
**Y.M.184**
निर्मलं निश्चलं नित्यं निर्गुणं निष्क्रियं महत् ।
**Y.R.001**
तस्य पादाम्बुजं नित्यं देवस्य प्रणमाम्यहम् ।
**Y.R.003**
यत्र जीवेशयोर्योगस्तं योगं नित्यमभ्यसेत् ।
**Y.R.004**
योगमेवाभ्यसेन्नित्यं बुधो मोक्षाय केवलम् ।
**Y.R.232**
खेचरीमुद्रिकाभ्यासं नित्यमेव समाचरेत् ।
**Y.R.260**
नादश्रवणतोनित्यमन्तर्लीनं भवेन्मनः ।
**Y.R.271**
दीपं वा दूरतो धृत्वा क्रमान्नित्यं समभ्यसेत् ।
**Y.Y.001/013**
आनन्दममृतं नित्यं परमात्मनमीश्वरम् ।
**Y.Y.001/034**
संन्यासाश्रमसंयुक्तो नित्यं कर्म समाचरन् ।
**Y.Y.006/013**
यद्वा समभ्यसेन्नित्यं वैदिकं लैकिकं तु वा ।
**Y.Y.006/079**
तस्मात्त्वं च वरारोहे नित्यं कर्म समाचर ।
**Y.Y.006/079**
सन्ध्याकालेषु वा नित्यं प्राणसंयमनं कुरु ।
**Y.Y.007/004**
कर्माणि यानि नित्यानि विहितानि शरीरिणाम् ।
**Y.Y.009/005**
अव्यक्तमचलं नित्यमादिमध्यान्तवर्जितम् ।
**Y.Y.009/007**
आनन्दमजरं नित्यं सदसत्सर्वकारणम् ।

## नित्यकर्मन्

**Y.Y.008/039**
तस्मात्त्वं च वरारोहे नित्यं कर्म समाचर ।
**Y.Y.010/021**
ज्ञानेनैव सहैतेन नित्यकर्माणि कुर्वतः ।
**Y.Y.012/040**
नित्यकर्मणि तान्दृष्ट्वा देवाश्च प्रणमन्ति हि ।
**Y.Y.012/041**
तस्माज्ज्ञानेन देहान्तं नित्यं कर्म यथाविधि ।

## नित्यनाथ

**H.R.001/082**
करोटिः पूज्यपादश्च नित्यनाथो निरञ्जनः ।

## नित्यानन्द

**A.P.006**
नित्यानन्दमयात्प्रभावनिलयाच्छ्रीराजयोगादृते ।

## निद्रा

**A.P.051**
दोषमृत्यु-जरा-दुःख-क्षुधा-निद्राविवर्जितः ।
**A.Y.001/049**
धर्मशान्तिः प्रजायेत मुहुर्निद्रा च मूर्च्छना ।
**A.Y.002/064**
निद्रादौ जागरस्यान्ते यो भाव उपपद्यते ।
**G. P.001/064**
न रोगान्मरणं तस्य न निद्रा न क्षुधा तृषा ।





**H.R.001/070**
त्यक्तनिद्रो मिताहारो जितश्वासो जितेन्द्रियः ।
**H.R.002/018**
न क्षुधा न तृषा निद्रा नैवालस्यं प्रजायते ।
**H.R.002/110**
निद्रां विहाय सा ऋज्वी ऊर्ध्वमुत्तिष्ठते हठात् ।
**H.R.004/023**
दोष दुःख जरा मृत्युक्षुधा निद्रा विवर्जितः ।
**S.SV.194**
क्षुधा तृषा तथा निद्रा कान्तिरालस्यमेव च ।
**S.SV.395**
स्वस्थाने तु समासीनो निद्रां चाहारमल्पकम् ।
**Y.B.016**
जरा मृत्युश्च कार्पण्यं, शोको निद्रा क्षुधा तृषा ।
**Y.M.054**
न रोगो मरणं तस्य न निद्रा न क्षुधा तृषा ।
**Y.M.153**
स्तम्भी निद्रा - चैव दाहिनी भ्रामिणी तथा ।
**Y.R.240**
बाह्यं विस्मृत्य निद्रायां स्वप्नं पश्येन्नरो यथा ।

## निद्रात्याग

**H.R.001/078**
निद्रात्यागात् जितश्वासात् पीठस्थैर्यादनालसात् ।

## निद्राभाव

**A.Y.001/061**
चतुः कलालयेनापि निद्राभावो निवर्तते ।

## निद्रावश

**S.SV.284**
आप्राणमिति पद्मश्च यावन्निद्रावशं गता ।

## निद्रिता

**Y.R.084**
यावत्सा निद्रिता देहे तावद्योगो न सिद्ध्यति ।

## निधि

**A.Y.002/054**
सदाभ्यासे स्थिरीभूते न निधिर्नैव च क्रमः ।
**S.SV.226**
अष्टमे सिद्धियश्चैव नवमे निधयो नव ।
**Y.R.150**
निधिं पश्यति दूरस्थं पातालं स्वेच्छयाव्रजेत् ।

## निधिस्थापन

**S.SV.108**
परोपकरणे चैव निधीनां स्थापने तथा ।

## निमित्तक

**S.SV.265**
निमित्तकप्रमादाद्वा यदा न ज्ञायतेऽनिलः ।

## निमिष

**S.SV.361**
प्रातः पृष्ठगते रवौ च निमिषाच्छयाऽङ्गुलिश्चाधरं...।

## निमीलन

**Y.Y.004/070**
निमीलनादि कूर्मस्य क्षुतं वै कृकरस्य च ।

## निमेष

**A.Y.001/046**
निमेषेण श्वासपलैर्नाडीभिः प्रहरैर्दिनैः ।
**A.Y.001/049**
निमेषट्कमात्रेण लयेनान्तास्थ योगिनः ।
**A.Y.002/045**
दृष्टिः स्थिरा यस्य विना निमेषाद् ।
**Y.R.273**
यदा मुहुर्तपर्यंतं निमेषोन्मेषवर्जिता ।

## निमेषमात्र

**A.Y.001/048**
योगी निमेषमात्रेण लयेन लभते ध्रुवम् ।

## निमेषवर्जित

**Y.R.269**
निमेषवर्जितं नेत्रं शनैस्तत्र नियोजयेत् ।

## निमेषोन्मेष

**A.Y.002/010**
अन्तर्लक्ष्यबहिर्दृष्टिर्निमेषोन्मेषवर्जिता ।

## नियतासन

**Y.Y.006/068**
तावत्समभ्यसेद्विद्वान्नियतो नियतासनः ।

## नियम

**H.R.002/073**
स्वस्थौ यो वर्तमानोऽपि योगोक्तैर्नियमैर्विना ।
**H.R.003/002**
इत्येवमादयश्चान्ये मनसो नियमाः स्मृताः ।
**H.R.003/003**
व्रतोपवासकाद्याश्च कायिका नियमाः स्मताः ।
**Y.R.016**
यमश्च नियमश्च स्यादासनं प्राणसंयमः ।
**Y.R.024**
पञ्चधा नियमश्चापि विज्ञेयः साधकोत्तमैः ।
**Y.R.029**
योगिनो नियमानां च परिपाकेन संशयः ।
**Y.R.030**
यमैश्च नियमैश्चापि योग्यः स्याद्योगसाधने ।
**Y.R.031**
यमाश्च नियमाश्चापि योगेप्सुभिरखंडिताः ।
**Y.Y.001/046**
यमश्च नियमश्चैव आसनं च तथैव च ।
**Y.Y.001/047**
यमश्च नियमश्चैव दशधा सम्प्रकीर्तितः ।
**Y.Y.002/002**
एते तु नियमाः प्रोक्तास्तांश्च सर्वान्पृथक्शृणु ।
**Y.Y.003/017**
यमैश्च नियमैश्चैव आसनैश्च सुसंयुता ।
**Y.Y.005/003**
यमैश्च नियमैर्युक्तः सर्वसङ्गविवर्जितः ।

## नियमग्रह

**H.R.001/023**
ततोऽभ्यासे दृढीभूते न तावान्नियमग्रहः ।
**H.R.001/077**
अत्याहारः प्रयासश्च प्रजल्पो नियमग्रहः ।

## नियमित

**A.P.010**
बिभ्राणः पवनं हठान्नियमितं ग्रासोऽस्ति मीनोदरे ।
**H.R.003/087**
प्राणं चेदिडया पिबन्नियमितं भूयोऽन्यया रेचयेत् ।

## नियम्य

**Y.R.142**
ततस्ततो नियम्याशु धारणादेशमानयेत् ।

## निरङ्कुश

**A.Y.002/073**
यथा निरङ्कुशो हस्ती कामान् प्राप्य निवर्तते ।

## निरञ्जन

**H.R.001/066**
चक्रभेदमितिज्ञात्वा चक्रातीत निरञ्जनम् ।
**H.R.001/082**
करोटिः पूज्यपादश्च नित्यनाथो निरञ्जनः ।
**S.SV.006**
निरञ्जनो निराकार एको देवो महेश्वरः ।
**S.SV.141**
पञ्चतत्त्वं परं तत्त्वं तत्त्वातीतं निरञ्जनम् ।
**Y.B.013**
सर्वाभावपदातीतं ज्ञानरूपं निरञ्जनम् ।
**Y.V.010**
चक्रभेदमिति ज्ञात्वा चक्रातीतं निरञ्जनम् ।
**Y.V.027**
दृश्यते देहरूपेण सर्वव्यापी निरञ्जनः ।
**Y.Y.001/012**
वासुदेवं जगद्योनिं योगिध्येयं निरञ्जनम् ।

## निरञ्जना

**A.Y.002/021**
अमृतोद्दीपिनी विद्या निरपाया निरञ्जना ।

## निरशन

**Y.R.295**
निरशनादग्निस्तूर्णं जाठरोदाहकृद्भवेत् ।

## निराकार

**G. P.002/092**
निराश्रयं निराकारं तत्त्वं जानाति योगवित् ।
**S.SV.006**
निरञ्जनो निराकार एको देवो महेश्वरः ।
**S.SV.019**
साकारे वा निराकारे शुभं वायुबलात्कृतम् ।





**S.SV.213**
हंबीजं गगनं ध्यायेन्निराकारं बहुप्रभम् ।
**S.SV.274**
निराकारात्समुत्पन्नं साकारं संकलं जगत् ।
**S.SV.274**
तत्साकारं निराकारं ज्ञाने भवति तत्क्षणात् ।
**Y.M.183**
निरामयं निराकारं तत्त्वं तत्त्वविदो विदुः ।

## निराकुल

**S.SV.136**
अनादिर्विषमः सन्धिर्निराहारो निराकुलः ।

## निरातङ्क

**G. P.002/095**
निरातङ्के निरालम्बे निराधारे निरामये ।
**Y.M.183**
निरातङ्कं निरालम्बं निष्प्रपञ्चं निराश्रयम् ।

## निराद्यन्त

**G. P.002/092**
निराद्यन्तं निरालम्बं निष्प्रपञ्चं निरामयम् ।

## निराधार

**G. P.002/095**
निरातङ्के निरालम्बे निराधारे निरामये ।

## निरामय

**A.Y.001/073**
अष्टरात्रल्पयेनापि भवेद् योगी निरामयः ।
**G. P.001/092**
यावद्बद्धो मरुद्देहे यावच्चित्तं निरामयम् ।
**G. P.002/092**
निराद्यन्तं निरालम्बं निष्प्रपञ्चं निरामयम् ।
**G. P.002/095**
निरातङ्के निरालम्बे निराधारे निरामये ।
**Y.B.011**
निश्चलं निर्मलं शान्तं, सर्वातीतं निरामयम् ।
**Y.M.037**
योगमार्गेण (येनद्वारेण) गन्तव्यं ब्रह्मस्थानं निरामयम् ।
**Y.M.080**
यावद्बद्धो मरुद्देहे तावच्चित्तं निरामयम् ।
**Y.M.183**
निरामयं निराकारं तत्त्वं तत्त्वविदो विदुः ।
**Y.R.175**
दृश्यते परमंज्योतिर्ब्रह्मभूतं निरामयम् ।
**Y.V.027**
आत्मरूपं तमालोक्य ज्ञानरूपं निरामयम् ।

## निरायास

**A.Y.002/027**
निष्कलं निर्मनस्कं च निरायासं सदा भज ।

## निरालम्ब

**A.Y.002/097**
ततोऽभ्यासनियोगेन निरालम्बो भवेद् यदि ।
**G. P.002/092**
निराद्यन्तं निरालम्बं निष्प्रपञ्चं निरामयम् ।
**G. P.002/095**
निरातङ्के निरालम्बे निराधारे निरामये ।
**H.R.003/061**
निरालम्बन योगी स्यान्निरालम्बनमासनम् ।
**H.R.003/061**
निरालम्बनता ध्यानं निरालम्बनमासनम् ।
**H.R.004/028**
एको देवो निरालम्बः एकावस्था मनोन्मनी ।
**Y.M.183**
निरातङ्कं निरालम्बं निष्प्रपञ्चं निराश्रयम् ।

## निरालम्बन

**H.R.003/011**
निरालम्बन चान्द्राख्यं काण्ठवं चैकपादकम् ।

## निरालम्बासन

**H.R.003/060**
सुखमुन्नमयन्नुच्चैर्निरालम्बनमासनम् ।
**H.R.003/061**
निरालम्बनता ध्यानं निरालम्बनमासनम् ।
**H.R.003/061**
निरालम्बन योगी स्यान्निरालम्बनमासनम् ।

## निराश

**S.SV.384**
निराशो निष्कलो योगी न किञ्चिदपि चिन्तयेत् ।

## निराश्रय

**G. P.002/092**
निराश्रयं निराकारं तत्त्वं जानाति योगवित् ।
**Y.M.183**
निरातङ्कं निरालम्बं निष्प्रपञ्चं निराश्रयम् ।

## निराहार

**S.SV.136**
अनादिर्विषमः सन्धिर्निराहारो निराकुलः ।

## निरीह

**A.Y.002/042**
स्याच्चेदेवं सहजममलं निर्विकारं निरीहं ।

## निरुद्ध

**G. P.001/070**
व्रजत्यूर्ध्वं हते शक्त्या निरुद्धो योनिमुद्रया ।
**Y.Y.012/002**
आयुर्विघातकृत्प्राणो निरुद्धस्त्वासनेन वै ।

## निरुपद्रव

**A.P.011**
यदि जीवेदोषधीभिः संसारे निरुपद्रवे ।
**H.R.001/067**
सुराष्ट्रे धार्मिकेदेशे सुभिक्षे निरुपद्रवे ।

## निरुपाधिक

**S.SV.151**
पीतश्वेतारुणश्यामैर्बिन्दुभिर्निरुपाधिकम् ।

## निरूहण

**S.K.S.023**
निरूहणाः स्थापनाद्या द्रव्यभेदैस्तु बस्तयः ।

## निरोध

**A.Y.001/058**
मनोवातनिरोधेन जागर्त्याधारसंस्थिता ।
**A.Y.001/065**
चित्तवृत्तिनिरोधेन गन्धं जानाति दूरतः ।
**A.Y.002/045**
वायुः स्थिरो यस्य विना निरोधात् ।
**G. P.002/001**
प्राणो देहे स्थितो वायुरपानस्य निरोधनात् ।
**G. P.002/006**
उत्तिष्ठत्युत्तमे योगी ततो वायुं निरोधयेत् ।
**H.R.001/007**
चित्तवृत्तिनिरोधस्तु महायोगः प्रकीर्तितः ।
**H.R.003/081**
मरणं तस्य निष्क्रान्ते ततो वायुं निरोधयेत् ।
**Y.M.078**
योनिस्थानमवाप्नोति ततो वायुं निरोधयेत् ।
**Y.M.079**
मरणं तस्य निष्प्राणः ततो वायुं निरोधयेत् ।
**Y.M.081**
योगिनामुत्तमश्चैव ततो वायुं निरोधयेत् ।
**Y.R.189**
निबद्धोमूलबन्धेन नीचैर्गतिनिरोधतः ।
**Y.R.246**
कर्णरन्ध्रयुगं पश्चादङ्गुलिभ्यां निरोधयेत् ।
**Y.Y.012/008**
ततोऽनिलं वायुसखेन सार्धं...निरोधयेत्तम् ।
**Y.Y.012/017**
निरोधितः स्याद् हृदि तेन वायुः...वायुसखेन सार्धम् ।

## निरोधक

**H.R.002/022**
रेचकोऽजस्त्र निःश्वासः पूरकस्तन्निरोधकः ।
**Y.B.122**
कण्ठसङ्कोचरूपोऽसौ, वायुमार्गनिरोधकः ।
**Y.R.088**
बन्धो जालन्धरः प्रोक्तः शिराजालनिरोधकः ।

## निर्गत

**G. P.002/100**
यत्स्वयं चादिनाथस्य निर्गतं वदनाम्बुजात् ।

## निर्गम

**S.SV.051**
हकारो निर्गमे प्रोक्तः सकारेण प्रवेशनम् ।
**S.SV.059**
निर्गमे तु शुभा वामा प्रवेशे दक्षिणा शुभा ।
**S.SV.105**
शुभकर्मणि सन्धौ च निर्गमे शुभः शशी ।





## निर्गमन

**S.SV.090**
परदत्ते तथा ग्राह्ये गृहान्निर्गमनेऽपि च ।
**S.SV.246**
तस्यार्थः सिद्धिमायाति निर्गमेनैव सुन्दरि ।

## निर्जन

**Y.Y.005/011**
निर्जने निलये रम्ये वातातपविवर्जिते ।

## निर्जनस्थान

**Y.R.131**
निःसंगो निर्जनस्थाने योगमेव सदाऽभ्यसेत् ।
**Y.R.269**
सुखासने समासीनो निर्जनस्थानगः सदा ।

## निर्जर

**G. P.002/038**
प्राणापानविधानेन योगी भवति निर्जरः ।
**Y.M.130**
प्राणापानविधानेन योगी भवति निर्जरः ।

## निर्झर

**H.R.004/010**
आदौ जलधिजीमूत भेरी निर्झर संभवाः ।

## निर्दोष

**G. P.002/037**
न्निर्दोषः समृणालकोमलवपुर्योगी चिरं जीवति ।
**H.R.002/139**
निर्दोषो हि मृणालकोमलवपुर्योगी चिरञ्जीवति ।
**Y.M.127**
निर्दोषस्य मृणालकोमलवपुः योगी चिरं जीवति ।

## निर्दोषयोनि

**H.R.002/094**
ऋतुकाले यथा शुक्लं निर्दोषं योनिसङ्गतम् ।

## निर्निमेष

**S.K.S.040**
सूक्ष्मलक्ष्ये दृशौ स्थाप्य निर्निमेषश्चिरं भवेत् ।

## निर्भय

**Y.Y.010/010**
निर्भयः सुप्रसन्नात्मा मर्त्यस्तु विजितेन्द्रियः ।

## निर्भास

**Y.Y.012/032**
तद्ब्रह्म निर्भासमयं गुहायामिति श्रुतिश्चेति...।

## निर्भ्रान्त

**Y.V.002**
भ्रान्तश्च भ्रमते लोको निर्भ्रान्तः कृतनिश्चयः ।

## निर्मत्सर

**H.R.002/104**
निर्मत्सराणां सिध्येत न तु मत्सरशालिनां ।

## निर्मनस्

**A.Y.002/110**
निर्मनः सहजस्थिते पुरुषे न दिवारात्रिशब्दोऽस्ति ।

## निर्मनस्क

**A.Y.002/027**
निष्कलं निर्मनस्कंच निरायासं सदा भज ।

## निर्मल

**A.Y.001/041**
यथा वातैर्विनिमुक्तो निश्चलो निर्मलोऽर्णवः ।
**A.Y.002/078**
निक्षिप्तं कनकंविहाय कलुष यद्वद् भवेन्निर्मलं...।
**A.Y.002/091**
इन्द्रियग्राहनिर्मुक्तेनिर्वाते निर्मलामृते ।
**G. P.002/061**
यच्चित्ते निर्मला चिन्ता तद्धि ध्यानं प्रचक्षते ।
**G. P.002/074**
निर्मलं गगनाकारं मरीचिजलसन्निभम् ।
**G. P.002/093**
निर्मलं निश्चलं नित्यं निष्क्रियं निर्गुणं महत् ।
**H.R.001/057**
...नादस्फुटत्वं नयने च निर्मले ।
**H.R.002/127**
स्नुहिपत्रनिभं शस्त्रं सुतीक्ष्णं स्निग्ध निर्मलम् ।

S.K.S.098
सुतीक्ष्णं निर्मलं श्लक्ष्णमत्यल्पं शस्त्रमुच्यते ।
S.SV.356
तद्रूपं कृष्णवर्णं यः पश्यति व्योम्नि निर्मले ।
Y.B.011
निश्चलं निर्मलं शान्तं, सर्वातीतं निरामयम् ।
Y.B.028
निष्कलं निर्मलं साक्षात्स्वरूपं गगनोपमम् ।
Y.B.053
यथाकाशस्तथा देह आकाशादपि निर्मलः ।
Y.M.168
निर्मलं गगनाकारं मरीचिजलसन्निभम् ।
Y.M.184
निर्मलं निश्चलं नित्यं निर्गुणं निष्क्रियं महत् ।
Y.R.180
नानावनानि रम्याणि निर्मलानि सरांसि च ।
Y.R.293
देशेऽनुकूले काले च समे स्थाने च निर्मले ।

## निर्मुक्त

A.P.028
वलीपलितनिर्मुक्तो जीवेदब्दशतत्रयम् ।
A.Y.002/063
मृत्युजीवननिर्मुक्तं तत्त्वं तत्त्वविदो विदुः ।
A.Y.002/091
इन्द्रियग्राहनिर्मुक्ते निर्वाते निर्मलामृते ।
G. P.002/094
हेतुदृष्टान्तनिर्मुक्तं मनोबुद्ध्योरगोचरम् ।
Y.M.172
समस्तोपाधि निर्मुक्तं तत्तत्त्वं योगिनो विदुः ।
Y.M.185
कातु दृष्टान्त निर्मुक्तमनुबन्धेरगोचरम् ।

## निर्मोह

A.P.022
निर्मोहस्सर्वसम्पन्नो निर्विकारो महाश्रयः ।

## निर्वाण

A.Y.001/044
ब्रह्मज्ञानमयत्वेन निर्वाणं मनसस्तथा ।
Y.Y.001/018
येनाहं यामि निर्वाणं कर्मणा मोक्षमव्ययम् ।

## निर्वाणपद

Y.Y.010/024
निर्वाणं पदमासाद्य प्रपञ्चं संपरित्यज ।

## निर्वात

A.Y.002/077
निर्वातस्थितदीपवत् सहजवान् यस्याः स्थितेर्लक्ष्यते ।
A.Y.002/078
निर्वातस्थितनिस्तरंगमुदकं स्वच्छस्वभावं परम् ।
A.Y.002/091
इन्द्रियग्राहनिर्मुक्ते निर्वाते निर्मलामृते ।
H.R.001/045
निर्वातभूमौ सन्तिष्ठेद्वशी हितमिताशनः ।
S.K.S.138
निर्भीतो रेचयेत्तोयं निर्वाते घटिकात्रयम् ।

## निर्वातदीप

Y.Y.009/021
निर्वातदीपवत्तस्मिन्दीपितं हव्यवाहनम् ।

## निर्विकल्प

S.SV.095
तत्सर्वं पूर्णनाडीषु जायते निर्विकल्पकम् ।
Y.B.171
सिद्धयः किं करिष्यन्ति निर्विकल्पो चिदात्मनि ।
Y.R.234
योगनिद्राचिराभ्यासान्निर्विकल्पः प्रजायते ।
Y.R.238
निर्विकल्पसमाधाने मनसो विलयो भवेत् ।

## निर्विकल्पसमाधि

Y.R.221
निर्विकल्पसमाधिः स्यात्कालेनाभ्यासयोगतः ।

## निर्विकार

A.P.022
निर्मोहस्सर्वसम्पन्नो निर्विकारो महाश्रयः ।
A.Y.002/034
दृश्यन्ते नहि निर्विकारसहजानन्दैकभोगाकुलाः ।





A.Y.002/042
स्याञ्चेदेवं सहजममलं निर्विकारं निरीहं ।
Y.Y.009/033
निर्विकारं परं शान्तं परमात्मानमीश्वरम् ।

## निर्विघ्न

S.SV.098
दूराध्वनि शुभश्चन्द्रो निर्विघ्नोऽभीष्टसिद्धिदः ।
Y.R.178
दिनानुदिनमित्येवं निर्विघ्नाभ्यासतो दृढम् ।

## निर्विषय

A.Y.002/079
बन्धाय विषयासङ्गि मुक्तये निर्विषयं मनः ।

## निर्वेद

A.Y.001/074
नवरात्रल्पेनापि निर्वेदस्यात्मवर्तनः ।

## निलय

Y.Y.005/011
निर्जने निलये रम्ये वातातपविवर्जिते ।
Y.Y.011/008
कर्माणि तस्य निलयः निरयः परिकीर्तितः ।

## निवर्तक

Y.Y.001/021
अनुष्ठितौ तौ विद्वद्भिः प्रवर्तकनिवर्तकौ ।
Y.Y.001/023
येन यत्क्रियते सम्यक् ज्ञानयुक्तं निवर्तकम् ।
Y.Y.001/023
निवर्तकं हि पुरुषं निवर्तयति जन्मतः ।

## निवारण

S.K.S.007
तासां निवारणं कार्यमासनैर्दिव्यभेषजैः ।

## निवृत्तफल

Y.Y.010/022
निवृत्तफलसङ्गस्य मुक्तिर्गार्गि करे स्थिता ।

## निवृत्ति

S.K.S.010
निवृत्तये व्यापदां वा दिव्यकर्माणि साधयेत् ।
Y.Y.001/064
प्रवृत्तौ वा निवृत्तौ वा एकरूपत्वमार्जवम् ।

## निशा

H.R.001/015
राजयोगं विना पृथ्वी राजयोगं विना निशा ।
S.SV.177
लाभः पृथ्वीकृतोह्नि स्यान्निशायां लाभकृज्जलम् ।
Y.R.068
घृतं नवीनं सेवेत निशायां च पयः पिबेत् ।
Y.Y.011/004
योगयुक्तमनुष्यस्य सन्ध्ययोर्वाथवा निशि ।

## निशाकर

G. P.002/003
मात्राद्वादशसंयुक्तौ दिवाकरनिशाकरौ ।
H.R.004/038
इडानिशाकरौ ज्ञेयौ सुषुम्ना सुखरूपिणी ।
S.SV.073
वृषकर्कटकन्यालिमृगमीना निशाकरे ।
S.SV.245
निशाकारे रवौ चारे मध्ये यस्य समीरणः ।
Y.M.093
मात्रा द्वादशसंयुक्ता दिवाकरनिशाकरौ ।

## निशीथ

Y.Y.012/004
प्रातःकाले प्रदोषे च निशीथे च समाहितः ।

## निषेध

Y.B.025
पश्चात्तस्य विधिः किञ्चिन्निषेधोऽपि कथं भवेत् ।

## निष्कल

A.Y.001/022
निष्कलं निष्प्रपञ्चं च परतत्त्वं तदुच्यते ।
A.Y.002/027
निष्कलं निर्मनस्कं च निरायासं सदा भज ।
A.Y.002/042
तस्मात्नूनं सकलविषया निष्कलाध्यात्मयोगाद् ।
A.Y.002/078
तद्वत् सर्वमिदं विहाय सकलं देदीप्यते निष्कलं ।

G. P.002/062
द्विविधं भवति ध्यानं सकलं निष्कलं तथा ।
G. P.002/062
चर्याभेदेन सकलं निष्कलं निर्गुणं भवेत् ।
S.SV.384
निराशो निष्कलो योगी न किञ्चिदपि चिन्तयेत् ।
Y.B.026
सकलं निष्कलं चैव, पूर्णत्वाच्च तदेव हि ।
Y.B.028
निष्कलं निर्मलं साक्षात्स्वरूपं गगनोपमम् ।

## निष्कृति

Y.Y.011/002
वैधं कर्म कथं कुर्यान्निष्कृतिः का त्वकुर्वतः ।
Y.Y.011/006
निष्कृतिस्तस्य किं बाले कृतकृत्यस्तदा खलु ।

## निष्क्रान्ति

G. P.001/091
मरणं तस्य निष्क्रान्तिस्ततो वायुं निरोधयेत् ।

## निष्क्रिय

G. P.002/093
निर्मलं निश्चलं नित्यं निष्क्रियं निर्गुणं महत् ।
Y.M.184
निर्मलं निश्चलं नित्यं निर्गुणं निष्क्रियं महत् ।

## निश्चल

A.Y.001/041
यथा वातैर्विनिमुक्तो निश्चलो निर्मलोऽर्णवः ।
A.Y.002/098
ततश्च निश्चलं किञ्चित् सानन्दं च गतागतम् ।
A.Y.002/099
सानन्दं निश्चलं चेतः ततः सुश्लिष्टमुच्यते ।
G. P.001/090
चले वाते चलो बिन्दुर्निश्चले निश्चलो भवेत् ।
G. P.002/053
मनसो निश्चलत्वेन धारणा साभिधीयते ।
G. P.002/093
निर्मलं निश्चलं नित्यं निष्क्रियं निर्गुणं महत् ।
H.R.001/078
उत्साहान्निश्चलद्धैर्यात्तत्त्वज्ञानार्थदर्शनात् ।
H.R.003/079
चले वाते चलं सर्वं निश्चले निश्चितै हठबन्धनम् ।
S.SV.266
निश्चलं धारणां कृत्वा पुष्पं हस्तान्निपातयेत् ।
Y.B.011
निश्चलं निर्मलं शान्तं, सर्वातीतं निरामयम् ।
Y.M.142
मनसो निश्चलत्वेन धारणा च विधीयते ।
Y.M.184
निर्मलं निश्चलं नित्यं निर्गुणं निष्क्रियं महत् ।
Y.R.277
तथैव प्रतिमाकारं निश्चलं जायते ध्रवम् ।
Y.Y.003/012
पार्श्वपादौ च पाणिभ्यां दृढं बद्धवा सुनिश्चलम् ।
Y.Y.005/014
समग्रीवशिरःकाय संवृतास्यः सुनिश्चलः ।

## निश्चलदृक्

H.R.001/052
निरीक्ष्य निश्चलदृशा सूक्ष्मलक्ष्यं समाहितः ।

## निश्चलमानस

Y.R.038
स्वाङ्के निधाय नासाग्रं पश्येन्निश्चलमानसः ।

## निश्चलीभूत

A.Y.002/099
अतीव निश्चलीभूतं सानन्दं च सुलीनकम् ।

## निष्पत्ति

A.P.045
निष्पत्तिः सर्वयोगेषु योगावस्था चतुर्विधा ।
A.P.052
निष्पत्तौ वैणवश्शब्दः क्वणन्वीत (न्निव) क्वणो भवेत् ।
H.R.004/017
निष्पत्तिः सर्वयोगेषु योगावस्था भवन्ति ताः ।
H.R.004/024
निष्पत्तौ वैणवः शब्दः क्वणद्वीणाक्वणो भवेत् ।

## निष्प्रपञ्च

A.Y.001/022
निष्कलं निष्प्रपञ्चं च परतत्त्वं तदुच्यते ।





G. P.002/092
निराद्यन्तं निरालम्बं निष्प्रपञ्चं निरामयम् ।
Y.M.183
निरातङ्कं निरालम्बं निष्प्रपञ्चं निराश्रयम् ।

## निष्प्राण

Y.M.079
मरणं तस्य निष्प्राणः ततो वायुं निरोधयेत् ।

## निष्फल

S.SV.162
नभसो निष्फलं सर्वं ज्ञातव्यं तत्त्ववादिभिः ।
S.SV.163
हानिःस्याद्वह्निवाताभ्यां नभसो निष्फलं भवेत् ।
S.SV.173
मोक्षदं नाभसं तत्त्वं सर्वकार्येषु निष्फलम् ।
S.SV.270
स्वरज्ञानिबलादग्रे निष्फलं कोटिधा भवेत् ।
Y.Y.002/017
नीचैः श्रुतो न चेत्सोऽपि श्रुतश्चेन्निष्फलो भवेत् ।

## निःश्वास

A.Y.002/022
प्राणाष्टोच्छ्वासनिःश्वासविध्वस्तविषयग्रहः ।
A.Y.002/060
निःश्वासोच्छ्वासहीनस्तु निश्चितं मुक्तएव सः ।
H.R.002/022
रेचकोऽजस्र निःश्वासः पूरकस्तन्निरोधकः ।
Y.Y.004/067
निःश्वासोच्छ्वसकासाश्च प्राणकर्मेति कीर्त्यते ।
Y.Y.006/028
निःश्वासोच्छ्वसकौ तस्य न विद्येते कथंचन ।

## नीचश्रुत

Y.Y.002/017
नीचैः श्रुतो न चेत्सोऽपि श्रुतश्चेन्निष्फलो भवेत् ।

## नीचायत

H.R.001/068
अल्पद्वारमरन्ध्रगर्तपिठरं नात्युच्चनीचायतं...।

## नीर

Y.R.295
काले तदुपशान्त्यर्थं क्षीरनीरान्वितं पिबेत् ।

## नीरस

G. P.001/060
नहि पथ्यमपथ्यं वा रसाः सर्वेऽपि नीरसाः ।
H.R.002/041
नहि पथ्यमपथ्यं वा रसाः सर्वेऽपि नीरसाः ।
Y.M.069
न हि पथ्यमपथ्यं वा रसाः सर्वेऽपि नीरसाः ।

## नील

S.SV.155
मारुतो नीलजीमूत आकाशः सर्ववर्णकः ।
S.SV.172
नीलं च वर्तुलाकारं स्वाद्वम्लं तिर्यगाश्रितम् ।
S.SV.357
पीते व्याधिर्भयं रक्ते नीले हानिं विनिर्दिशेत् ।

## नीलनिभ

G. P.002/071
ध्यायन्नीलनिभं नित्यं भ्रूमध्ये परमेश्वरम् ।

## नीवारशुक

Y.Y.009/023
नीवारशुकवद्रूपं पीताभं सर्वकारणम् ।

## नृ

Y.R.008
इन्द्रियार्थेषु सक्तानां देहाध्यासवतां नृणाम् ।

## नृत्य

S.SV.109
गीतवाद्यादिनृत्यादौ नृत्यशास्त्रविचारणे ।

## नृत्यशास्त्र

S.SV.109
गीतवाद्यादिनृत्यादौ नृत्यशास्त्रविचारणे ।

## नृप

A.P.007
नित्यं मन्त्रयतो लभेन्न नृपतां नैवाधिपत्यं तथा ।

**S.SV.092**
गुरुबन्धुनृपामात्येष्वन्येषु शुभदायिनी ।

## नेति

**H.R.001/025**
चक्रिनौंलिर्धौतिर्नेतिर्वस्तिर्गजकरिणी...।
**H.R.001/026**
धौतिर्बस्तिस्तथा नेतिस्त्राटकं नौल्किा तथा ..।
**H.R.001/039**
मन्थनं च ततः कुर्यान्नेतिः सिद्धैर्निगद्यते ।
**H.R.001/040**
जत्रूर्ध्वजातरोगघ्ना जायते नेतिरुत्तमा ।
**H.R.001/040**
नेतिस्वरूपं कथितं श्रीनिवासेन योगिना ।
**H.R.001/064**
शोधनं कार्यमाज्ञायां नेतित्रोटन कर्मणा ।
**S.K.S.017**
अन्तर्भस्त्रा घ्राणदन्ती धौती नेती द्विधा स्थिता ।

## नेतिका

**S.K.S.067**
मुखान्निर्गमयेद्सूत्रौ चिन्तयेन्नेतिका स्मृता ।

## नेतिसूत्र

**H.R.001/037**
षड्वितस्तिमितं सूत्रं नेतिसूत्रस्य लक्षणम् ।

## नेत्र

**S.K.S.034**
नेत्रकर्णाद्यूर्ध्वरोगनाशनं मलशोधनम् ।
**S.K.S.089**
नेत्रे तेजो बिन्दुवश्यं निरुक्तं...।
**S.K.S.097**
रसाञ्जनाञ्जनं नेत्रे रेचनं सूर्यदैवतम् ।
**S.K.S.105**
त्रिफला शीततोयेन नेत्राश्च्योतनमुत्तमम् ।
**S.K.S.143**
जलान्तः संप्रविश्याथ नेत्रे विस्फार्य निर्गतः ।
**S.SV.150**
वदन प्रान्तके चान्याङ्गुलिर्दद्याच्च नेत्रयो ।
**S.SV.290**
चन्द्रनेत्राग्नितत्त्वेषु वन्ध्या पुत्रमवाप्नुयात् ।

**S.SV.385**
विश्वस्य वेदिका शक्तिर्नेत्राभ्यां परिदृश्यते ।
**Y.R.269**
निमेषवर्जितं नेत्रं शनैस्तत्र नियोजयेत् ।
**Y.Y.001/009**
ऋषीनालोक्य नेत्राभ्यां वाक्यमेतदभाषत ।
**Y.Y.005/016**
स्रवन्तममृतं पश्यन्नेत्राभ्यां सुसमाहितः ।
**Y.Y.006/061**
नेत्राभ्यां दक्षिणं गुल्फं लोकयन्नुपरिस्थितम् ।
**Y.Y.007/025**
नेत्रात्प्राणं समाकृष्य नासामूले निरोधयेत् ।

## नेत्रबस्ति

**S.K.S.022**
नेत्रकर्णशिरोलिङ्गबस्तयः पायुजाः पराः ।
**S.K.S.143**
नेत्रे संमार्जयेद्योगी नेत्रबस्तिरयं स्मृतः ।

## नेत्रमध्य

**Y.Y.007/025**
भ्रवोर्मध्यात्समाकृष्य नेत्रमध्ये निरोधयेत् ।

## नेत्रमूल

**Y.Y.007/018**
नेत्रस्थानं तु तन्मूलादर्धाङ्गुलमितीष्यते ।

## नेत्ररोग

**H.R.001/053**
स्फोटनं नेत्ररोगाणां तन्त्रादीनां कवाटकम् ।
**S.K.S.042**
नेत्ररोगास्तथा तन्द्रा नश्यन्तीत्याह धूर्जटिः ।

## नेत्रशालाक्यकर्मन्

**S.K.S.083**
नेत्रशालाक्यकर्मैतत्सद्यो दृष्टिप्रदायकम् ।

## नेत्रान्त

**Y.Y.004/041**
याम्ये पूषा च नेत्रान्तं पिङ्गलायास्तु पृष्ठतः ।

## नेत्रीकरण

**S.K.S.015**
त्राटकं च कशाकर्म नेत्रीकरणमुत्तमम् ।





**S.K.S.045**
नेत्रीकरणमेतद्धि न देयं चापरीक्षिते ।

## नेत्रोपान्त

**S.K.S.081**
नेत्रोपान्ते तु यद्द्वारं कथितं पूर्वसूरिभिः ।

## नैयायिक

**H.R.004/057**
इति वैशेषिकः प्राहुस्तथा नैयायिकाऽपि च ।

## नैवेद्य

**H.R.001/076**
शिवार्पितं च नैवेद्यं योगी भोजनमाचरेत् ।

## नैष्टिक

**Y.Y.001/056**
ब्रह्मचर्याश्रमस्थानां यतीनां नैष्टिकस्य च ।

## नौकाधिरोहण

**S.SV.114**
स्त्रीसङ्गवेश्यागमने महानौकाधिरोहणे ।

## नौलि

**H.R.001/025**
...गुरुसम्प्रदायानुसारेण नौल्याद्यष्टकर्माणि ब्रूमः ।
**H.R.001/025**
चक्रिनौंलिर्धौतिर्नेतिर्वस्तिर्गजकरिणी...।
**H.R.001/026**
धौतिर्बस्तिस्तथा नेतिस्त्राटकं नौल्किा तथा ..।
**H.R.001/031**
सा च नौलिर्द्विधा प्रोक्ता भारीचैकान्तिकान्तरा ।
**H.R.001/032**
नतांसो भ्रामयेदेषा नौलिर्गौडैः प्रशस्यते ।
**H.R.001/033**
...दोषामयशोषणी च हठक्रियामौलिरियं च नौलिः ।
**S.K.S.021**
वेतण्डकरणी नौली गण्डूषः स्नेहनं परम् ।
**S.K.S.087**
पीत्वा तोयं कण्ठनालेन नौलीं ...नालवुत्थितौ...।
**S.K.S.136**
नौलीं कृत्वा तु शुद्धः स्यादुत्कटासनसंस्थितः ।

## नौलिकर्मन्

**H.R.001/062**
मणिपूरं नाभिगतं नौल्याख्येन तु कर्मणा ।

## नौलिक्रिया

**S.K.S.132**
नौलीक्रियासुसंपन्नस्त्यक्तमूत्रमलः सुधीः ।

## न्यायरत्नार्णव

**H.R.001/002**
तन्त्रे प्राभाकरीये शशधदरचिते न्यायरत्नार्णवेन्दी ।

## न्यायार्जित

**Y.Y.002/005**
न्यायार्जितं धनं चान्नमन्यद्वा यत्प्रदीयते ।

## प

## पक्व

**Y.B.034**
अपक्वा योगहीनास्तु पक्वा योगेन देहिनः ।
**Y.B.035**
पक्वो योगाग्निना देही, ह्यजडः शोकवर्जितः ।
**Y.Y.004/063**
ततः सुपक्वमकरोद्वह्निः सन्तप्तवारिणा ।

## पक्षक्षय

**S.SV.325**
तयोर्द्वयोर्बन्धुहृद्विपत्तिः पक्षक्षये...।

## पङ्कज

**G. P.001/018**
आधाराख्ये गुदस्थाने पङ्कजं च चतुर्दलम् ।
**H.R.003/040**
करौ सम्पुटितौ कुर्यात्तत्सम्पुटितपङ्कजम् ।
**H.R.003/060**
कराभ्यां पङ्कजं कृत्वा तिष्ठेत्कूर्परया सुधीः ।
**Y.M.011**
आधाराख्ये गुदस्थाने पङ्कजं यच्चतुर्दलम् ।

## पञ्चगुण

**S.SV.192**
पृथ्वी पञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम् ।

